अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा




**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में –**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**–और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

चन्दे की दरें (वार्षिक)

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. **252.00**

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. **252.00**

**अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा**
**'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:**

न मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

कविहृदयम्–

# जीवननीतिः

मनः सत्त्वधैर्यं सदैवावलम्ब्यम्
मनः कुत्सवाक्यं प्रशान्तं हि सह्यम्।
मनः सौम्यवाक्यं स्वयं वर्णयस्व
मनः सर्वलोकान् सदा प्रीणयस्व॥

कश्चन कविः स्वस्य मनः उद्दिश्य वदति– "भोः मनः! भवता सदा श्रेष्ठं धैर्यं अवलम्बनीयम्। अन्येषां कोपवचनम् अपि भवता शान्ततया एव सोढव्यम्। भवता सदा अपि अपरुषाणि मृदूनि वचनानि एव वक्तव्यानि। अये मनः, भवान् सर्वदा सर्वान् तोषयतु" इति।

कविः सर्वेषां जीवने अत्यावश्यकान् कांश्चन गुणान् अस्मिन् श्लोके प्रार्थयते। धैर्यं सर्वेषां जीवने भवेत् एव। यतः जीवने भीतिः प्रायः प्रतिदिनं बाधते। अत्र भीतिशब्दात् महाभीतयः केवलं न उक्ताः। महापायभीतिः चोरभीतिः इत्यादयः जीवने क्वचित् अगच्छेयुः नाम। किन्तु व्ययभीतिः, श्रमभीतिः, अपरिचिते स्थले गमनार्थं भीतिः, अज्ञातेन जनेन सह वार्तालापार्थं भीतिः, अकृतपूर्वस्य कार्यस्य करणे भीतिः इत्यादयः प्रतिदिनं प्रतिजनं बाधन्ते। अतः एव कविना प्रार्थ्यते– 'अये मनः, भवता सदा धैर्यम् अवलम्बनीयम्' इति।

वयं परपीडनं न कुर्याम चेदपि दुष्टपदानि, निन्दावाक्यानि, अपवादवचनानि तदा तदा श्रोतव्यानि भवन्ति एव। धर्मराजः अजातशत्रुः इति ख्यातः। तेनापि निन्दावचनादीनि श्रुतानि। एवं स्थिते अस्मदादीनां का कथा? निन्दावाक्यादीनां निवारणं तु न शक्यते एव। अतः तेषां श्रवणतः मनः कलुषितं यथा न भवेत् तथा आत्मसंस्कारः सम्पादनीयः अस्माभिः।

मृदुवचनं प्रायः सर्वान् तोषयति। वयम् अन्यस्य धनसाहाय्यम्, अन्यविधसाहाय्यं वा कर्तुं न शक्नुयाम। किन्तु मृदुवचनं वक्तुं तु सदा शक्नुयाम एव। यदि अन्यस्य सन्तोषः भवेत् तर्हि मृदुवचनस्य कथने का हानिः? किन्तु अस्मासु उत्पन्नाः कोप-तापोद्वेगादयः मृदुवचनकथने विघ्नं कर्तुम् अर्हन्ति। अतः प्रयत्नात् मृदुवचनानि एव वक्तव्यानि।

वयं जीविते महत् किमपि साधयितुं न शक्नुयाम चेदपि लोकस्य सन्तोषं कर्तुं शक्नुयाम चेत् सा एव महती सिद्धिः। अस्मत्कारणतः लोके कोऽपि खेद-दुःखादिकं यथा न प्राप्नुयात् तथा व्यवहरणीयम् अस्माभिः। एतेन सहैव यदि लोकसन्तोषार्थं किमपि कर्तुम् अपि शक्नुयाम तर्हि सुवर्णे सौगन्ध्ययोगः इव महते लाभाय।

# भवतः कथा पठिता

वाचकः – अस्य सप्ताहस्य पत्रिकायां भवतः कथां पठितवान्। अभिनन्दनानि।

Read your story in the current week's magazine. Congratulations.

लेखकः – अनुगृहीतः अस्मि। कथा भवते अरोचत वा?

Thank you. You liked the story?

वा – आम्। उत्तमा कथा। निरूपणशैली उत्तमा आसीत्। एषु दिनेषु भवता अन्या काऽपि कथा लिखिता वा?

Yes. It's a good story. The presentation is good. You have other stories written recently?

ले – वस्तुतः तु भवता पठिता कथा वर्षात् पूर्वं लिखिता आसीत्। एषु दिनेषु काऽपि कथा मया न लिखिता।

The story which you read was in fact written a year ago. I have not written any story recently.

वा – किमर्थम्?

Why?

ले – यदा मनसि काऽपि कथा स्फुरति तदा लिखामि। एषु दिनेषु काऽपि कथा न स्फुरिता।

I write as and when I get ideas. Nothing has come into my mind recently.

वा – किमर्थम् एवं भवति?

Why is it so?

ले – उत्तरं किमिति वदामि? अस्माकं मनःस्थितिः, अनुभवः, कार्यव्यापृतिः इत्यादयः अत्र कारणानि स्युः।

What answer can I give you? Maybe it depends on one's state of mind. One must be free to think.

वा – केचन सदा कथाः लिखन्ति खलु?

Some of them go on writing stories!

ले – प्रायः ते विशिष्टप्रतिभाशालिनः भवन्ति। अन्यच्च ये निरन्तरं लिखन्ति तेषां सर्वाः कथाः उत्तमाः न भवन्ति।

They are highly versatile people. But there is one thing. The stories they write may not always be good.

वा – एतदपि सत्यम् एव।

Yes. You are right.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अचिनोत् - | Elected |
| अद्वितीयः - | Incomparable |
| अनुवर्तितवान् - | Continued |
| आच्छन्नः - | Covered |
| आर्द्रः - | Wet |
| उत्तरीयम् - | Upper cloth worn over the shoulders |
| उपचयः - | Crop |
| उष्णीषम् - | Turban |
| काचकम् - | Glass |
| कुब्जः - | Hunchbåck |
| कोषः - | Pocket |
| चोलः - | Blouse |
| छायाग्राहकम् - | Camera |
| जवनिका - | Curtain |
| तण्डुलः - | Rice |
| ताम्बूलम् - | Betel leaves and areca nut offered to invitees |
| दंष्टुम् - | To bite |
| देशद्रोहिता - | Treason |
| द्रष्टा - | Spectator |
| धूलिः - | Dust |
| निम्बवृक्षः - | Neem tree |
| निर्गमनम् - | Going out |
| निश्शुल्कम् - | Free of cost |
| परिग्रहीतुम् - | To take possession of |
| परिवृता - | Sorrounded |
| प्रतिज्ञातः - | Promised |
| भित्तिः - | Wall |
| मद्यम् - | Liquor |
| मधु - | Honey |
| मुद्रा - | Currency |
| यथास्थितम् - | As it was |
| युतकम् - | Shirt |
| वृष्टिः - | Rain |
| शिरीषपुष्पम् - | Sirisha flower |
| सभासद् - | Member of the audience |
| सर्पति - | Crawls |
| सर्पिणी - | Snake (Female) |
| स्कन्धः - | Shoulder |
| स्थगयतु - | Stop |
| स्थूलोदरः- | Pot-bellyed |



# चन्दमामा

जुलै-१९९३

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'






## बालेषु पुस्तकप्रीतेः अभिवर्धनम्

एषु दिनेषु पठनप्रवृत्तिविषये, तत्रापि बालानां पठनप्रवृत्तिविषये विशेषचर्चा क्रियमाणा दृश्यते। पठनप्रवृत्तिसम्बन्धे कुतूहलकारिणः केचन अंशाः एवं सन्ति– प्रपञ्चे पुस्तकप्रकाशनक्षेत्रे भारतस्य अष्टमं स्थानम् अस्ति। अत्र वर्षावधौ प्रतिजनं ३२ पुटाः पठ्यन्ते। सर्वेषु प्राप्तप्रगतिषु देशेषु सर्वेक्षणं कृत्वा युनेस्कोसंस्थया सूचितं यत् प्रत्येकेन प्रतिवर्षं द्विसहस्राधिकपुटाः (२०० पुटात्मकानि १० पुस्तकानि वा) अवश्यं पठनीयाः इति। भारते १,३०० अधिकाः दिनपत्रिकाः, ६,००० साप्ताहिकपत्रिकाः, सहस्रशः मासिकादिपत्रिकाः च प्रकाश्यन्ते। एवं तर्हि एताः पत्रिकाः कति जनाः पठन्ति? आधुनिकं सर्वेक्षणं निरूपयति यत् ०.०१% जनाः प्रतिदिनम् एकां पत्रिकां पठन्ति इति।

बालकेषु पठनप्रवृत्तिः कीदृशी भवति? निराशादायिका न इति वदेयुः केचन। एवं हि श्रूयते यत् भारते ७४०,००० विद्यालयेषु (४०% विद्यालयेषु) ग्रन्थालयाः भवन्ति इति। प्राथमिकशालासु, ग्रामपञ्चायतीयशालासु, नगरसभाशालासु सर्वकारीयशालासु च ग्रन्थालयाभावः विशेषतः दृश्यते। ग्रन्थालयं व्यवस्थापयितुं स्थलं, धनसामर्थ्यं वा एतादृशीनां शालानां न भवति।

यदि ग्रन्थालये पुस्तकसङ्ग्रहः उत्तमः स्यात्, यदि च पुस्तकवितरणव्यवस्था समीचीना स्यात् तर्हि पुस्तकपठनात् बालान् निवारयितुं प्रायः कोऽपि न शक्नोति। केषुचित् विद्यालयेषु ग्रन्थालयीयपुस्तकानां पठनार्थम् एव अवधिः निश्चीयते। पुस्तकेषु दृष्टानाम् उत्तमवाक्यानां सङ्ग्रहः करणीयः इति छात्राः प्रोत्साह्यन्ते, यस्य च सत्परिणामः भाविजीवने दृश्येत।

पुस्तकं पठनीयम् एव इति आज्ञया आग्रहेण वा न किमपि प्रयोजनम्। पुस्तकपठने बालाः स्वयं यथा प्रवर्तेरन् तथा रुचिः उत्पादनीया, पठनप्रवृत्तिः च जागरणीया। अतः विद्यालयीयग्रन्थालयानां कर्तव्यम् एतत् भवति यत् ते बालेषु पुस्तकप्रीतिः यथा वर्धेत तथा प्रयत्नं कुर्युः इति।

शैक्षणिकवर्षारम्भः सद्यः जातः अस्ति। शालाश्च पुनरारब्धाः सन्ति। अतः पुस्तकविषये पुस्तकपठनविषये च चिन्तयितुम् एव योग्यः कालः।

सम्पुटः–१० जुलै–१९९३ सञ्चिका–४

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००



# नामनिर्वचनम्-७

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।]*

**सुदर्शनः–** सुदर्शनशब्दस्य व्युत्पत्तिः त्रिधा दर्शिता दृश्यते–

(१) शोभनं निर्वाणफलं दर्शनं ज्ञानम् अस्य इति।

(२) शुभे दर्शने ईक्षणे पद्मपत्रायते अस्य इति।

(३) सुखेन दृश्यते भक्तैः इति।

'यः अतिसुन्दरतया दृश्यते सः सुदर्शनः' इति सामान्यम् अर्थं वक्तुं शक्नुमः वयम्। भगवतः विष्णोः चक्रस्य नाम 'सुदर्शनः' इति। एषः एव अर्थः लोके बहुधा रूढः। अन्ये अपि त्रिचतुराः अर्थाः कोषकारैः निर्दिष्टाः। तद्यथा– 'सुदर्शनो हरेश्चक्रे मेरुजम्बुद्रुमे पुमान्। न द्वयोः शक्रनगरे ....' (मेदिनीकोषः)।

**दिनकरः–** करोति इति करः। [(डु)कृञ्-करणे+अच्)] दिनस्य करः दिनकरः। यः दिनं करोति सः दिनकरः= सूर्यः। अत्र दिनशब्दस्य रात्रिभिन्नकालः सूर्योपस्थितिकालः विवक्षितः। [द्यति तमः = दो (अवखण्डने+इनच्)] यत् तमः नाशयति निवारयति वा तत् दिनम् इति उच्यते। तादृशस्य तमोनाशनस्य कर्ता भवति सूर्यः। अतः सूर्यः दिनकरः इति उच्यते।

दिनशब्दस्य 'दिवा= रात्रिसहितः कालः' इत्यपि अर्थः अस्ति। सूर्यः यदा अस्तं गच्छति तदा रात्रेः उदयः भवति। एवं सूर्यस्य अनुपस्थितिः रात्रेः कारणं भवति। अतः दिवारात्रिसहितस्य दिनस्य करः दिनकरः इति अर्थः उच्यते चेदपि न दोषः।

**धारिणी–** [धृ(धारणे)+णिनिः+स्त्रियां ङीप्] यस्याः विषयादिधारणशीलता भवति सा धारिणी इति उच्यते। विषयधारणं नाम – अल्पश्रमेण अवगतिः, ज्ञातस्य सदा स्मरणं, युक्ते काले विषयस्य बुद्धौ उपस्थितिः– इत्यादयः अर्थाः ग्रहीतुं शक्याः। अतः एतादृशगुणयुक्ता 'धारिणी' भवति।

---

**सूचना–** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

**सङ्केतः-** संस्कृतपत्रिका 'असरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.

वार्ताविशेषः–

# षष्ठवारं राष्ट्रपतिपदवीप्राप्तिः



कश्चित् राजनीतिज्ञः षड्वारं राष्ट्रपति-पदवीनिमित्तं चितः भवेत् इति तु न हि सामान्यः विषयः। किन्तु इण्डोनेशियादेशस्य राष्ट्रपतिः सुहार्तोवर्यः एतादृशं विशिष्टं गौरवं प्राप्तवान् अस्ति। गते मार्च्मासे १००० सदस्यात्मिका परामर्शदात्री सभा जकार्तानगरे प्रवृत्ते दशदिनावधिके सम्मेलने ७२ वर्षीयं सुहार्तोवर्यं राष्ट्रपतित्वेन अचिनोत्। एतत् चयनम् अविरोधम् आसीत्। षष्ठवारं चितः अपि सुहार्तोवर्यः एतत्स्थानार्थं सुयोग्यः एव इति सर्वैः परिगण्यते।

१६ शतके १३,००० द्वीपात्मके इण्डोनेशियादेशे यदा पोर्चुगीस्-वणिजः गत्वा वासम् आरब्धवन्तः तदा एतेन देशेन प्रपञ्चमानचित्रे स्थानं प्राप्तम्। सुगन्धद्रव्याणाम् आकर्षणेन तत्र गताः आसन् पोर्चुगल्वणिजः। किन्तु आंग्लवणिजः तान् ततः अपसारितवन्तः। १५९५ तमे वर्षे डच्वणिजः एतान् अपसारितवन्तः। ततः २०० वर्षाणि यावत् एषः देशः डच् ईष्ट् इण्डिया कम्पनीवशे आसीत्। १७६८ तमे वर्षे एषः नेदर्ल्याण्ड् अधीनः जातः। द्वितीय-जागतिकयुद्ध-सन्दर्भे (१९३९-१९४५) जपानदेशः एतं देशं स्वायत्तम् अकरोत्। १९४५ तमे वर्षे यदा जपानदेशः मित्रराष्ट्राणि शरणम् अगच्छत् तदा सुकर्णोनायकत्वे इण्डोनेशियाराष्ट्रवादिनः स्वातन्त्र्यम् उद्घुष्टवन्तः। १९४९ तमे वर्षे तेन देशेन पूर्णस्वातन्त्र्यं प्राप्तम्।

१९६३ तमे वर्षे नेदर्ल्याण्ड्देशेन पश्चिम न्यू गिनीप्रदेशः इण्डोनेशियाधीनः कृतः। १९६६ तमे वर्षे साम्यवादिनः सुकर्णोवर्यं पदच्युतं कर्तुं प्रयत्नं कृतवन्तः। तत्समये राडन् सुहार्तोवर्यः सेनापतिः आसीत्। सः विद्रोहकार्यं निगृह्य देशे आपत्परिस्थितिं घोषितवान्। १९६७ तमे वर्षे सः कार्यकारी राष्ट्रपतिः जातः। ततः वर्षाभ्यन्तरे निर्वाचनप्रक्रियया तदीयं पदं दृढीकृतम्। अनन्तरं १९७३, १९७८, १९८३, १९८८ इत्येतेषु वर्षेषु प्रवृत्तेषु निर्वाचनेषु अपि सुहार्तोवर्येण जयः प्राप्तः।

सुहार्तोवर्यः मितभाषी, किन्तु शासनकार्ये अपूर्वसामर्थ्यवान् अस्ति। गतेषु २५ वर्षेषु तेन देशे याः आर्थिकनीतयः आश्रिताः तासां परिणामतः तत्र महत् परिवर्तनं जातं दृश्यते।

विशिष्य तत्र आश्रिता पञ्चवार्षिकी योजना जगतः अवधानम् आकृष्टवती अस्ति। तत्र इदानीं प्रातिवार्षिकी वृद्धिः ६% मिता अस्ति। राष्ट्रपतिः सुहार्तो वदति यत् एतादृशी प्रगतिः दशभिः देशैः केवलं साधिता अस्ति इति।




पूर्वकाले इण्डोनेशियादेशेन अन्यदेशेभ्यः महता प्रमाणेन तण्डुलः क्रीयते स्म। १९४८ तमे वर्षे एतेन आत्मनिर्भरता सम्पादिता। एतावदेव न, पूर्वं शिशुमरणसङ्ख्या प्रतिसहस्रं १४० मिता या आसीत्, सा इदानीं ६० मिता जाता अस्ति। इदानीं तत्र सर्वे बालाः विद्यालयं गच्छन्तः सन्ति। १९७१ तमे तत्र निरक्षरता ३९% आसीत्। इदानीं च १६% अस्ति। जनसङ्ख्यावृद्धिः २.३% आसीत्। सा इदानीं १.६% अस्ति। अतः एव इण्डोनेशियादेशे उच्यते यत् सुहार्तोवर्यः 'विकासनायकः' इति। अग्रिमेषु २५ वर्षेषु या प्रगतिः साधनीया अस्ति तदर्थं सुहार्तोवर्येण योजना सज्जीकृता अस्ति।

**इण्डोनेशियाविषये ज्ञातव्याः पुनः केचन अंशाः**

* १३,५०० द्वीपैः युक्तः इण्डोनेशियादेशः ५,१५० कि.मी.विस्तृतः अस्ति।
* इण्डोनेशियादेशः प्रपञ्चे वैशाल्येन (१७,१९,४४ वर्ग कि.मी.) षोडशः अस्ति। एवम् एव जनसङ्ख्यया एषः प्रपञ्चे पञ्चमः (१६.९ कोटिमिता) अस्ति।
* सैन्यबलदृष्ट्या एतस्य एकादशं स्थानम्। केनडादेशः दशमस्थानीयः अस्ति।
* वेगेन अभिवृद्धिं गच्छत्सु देशेषु एतस्य पञ्चमं स्थानम्।
* अधिकतण्डुलोत्पादकेषु एषः देशः तृतीयः।
* एतस्य देशस्य शासकीया भाषा 'बसाहा इण्डोनेशिया', यस्याश्च लिपिः रोमन्। अत्र प्रायः २०० प्रादेशिकभाषाः सन्ति।
* एतस्य देशस्य मुद्रायाः नाम 'रुपिया' इति।



# अपायः अपगतः

सर्वेश्वरपुरे कश्चन भूस्वामी आसीत्। तस्य कार्यालये वीरभद्रः नाम युवकः कार्यं करोति स्म। एकदा भूस्वामी वीरभद्रं कार्यनिमित्तम् अन्यं ग्रामं प्रेषितवान्। वीरभद्रः सायङ्कालात् पूर्वम् एव गम्यस्थानं प्राप्तव्यम् इति चिन्तयन् वेगेन गच्छति स्म। वीरभद्रः यदा अरण्यमार्गेण गच्छन् आसीत् तावता एव मेघगर्जनसहिता वृष्टिः आरब्धा।

वीरभद्रः ततः अग्रे गन्तुं न शक्तवान्। शरीरस्य आर्द्रतां निवारयितुम् इच्छन् सः परितः दृष्टवान्। तडितः प्रकाशे तेन तत्र कानिचन गृहाणि दृष्टानि। वीरभद्रः धावन् किञ्चन पुरातनगृहं प्राप्तवान्, द्वारशब्दं कृतवान् च।

तदा कश्चित् वृद्धः पङ्गुः द्वारम् उद्घाट्य उक्तवान्– "भवान् वृष्ट्या आर्द्रः इति मन्ये। अन्तः आगच्छतु" इति।

"न तावदार्द्रः" इति वदन् वीरभद्रः गृहस्य अन्तः गतवान्। वृद्धः वीरभद्रं पृष्टवान्– "महान् अन्धकारः, महती वृष्टिरपि। इदानीं कुत्र गच्छति भवान्?" इति।

तदा वीरभद्रः उक्तवान्– "अहं सर्वेश्वरपुरस्य भूस्वामिनः कर्मकरः। तस्य गृहे अहं रक्षकः अस्मि। भूस्वामिनः कनिष्ठः पुत्रः 'मातुलस्य गृहे स्थितः मार्जारः एव आवश्यकः' इति वदन् भोजनम् अपि त्यक्त्वा रोदनं कृतवान्। अतः तं मार्जारम् आनेतुम् अहं प्रस्थितः" इति।

एतत् श्रुत्वा सः वृद्धः उच्चैः हसन् उक्तवान्– "भवान् तु युवकः अस्ति। भवतः वयः पञ्चविंशतिवर्षात्मकं स्यात्। भवता खड्गादिकं गृहीत्वा राज्यरक्षणं, महाराजस्य रक्षणादिकं च करणीयम्। भवान् तु मार्जारादीनाम् अन्वेषणं कुर्वन् अस्ति! कीदृशः विचित्रः भवान्?" इति।

किम् उत्तरं वक्तव्यम् इति अजानन्

"अनामिका"



तस्याः नाम अलका इति। यः तां परिणेष्यति सः एव एतस्य राज्यस्य महाराजः भविष्यति। इदानीं सा एकं प्रकटनं कृतवती अस्ति यत् मया पृच्छ्यमानानां त्रयाणाम् प्रश्नानाम् अपि एकमेव तृप्तिकरम् उत्तरं यः वदति तम् एव परिणेष्यामि इति। यः समाधानकरं उत्तरं न ददाति तं सा मकरेभ्यः आहाररूपेण ददाति" इति।

"एतादृशान् विषयान् भवान् कथं जानाति?" इति आश्चर्येण पृष्टवान् वीरभद्रः।

तदा वृद्धः उक्तवान्– "अहं महाराजस्य अङ्गरक्षकत्वेन पञ्चदश वर्षाणि यावत् कार्यं कृतवान् अस्मि। एकस्य रथस्य अपघाते अहं महाराजं रक्षितुम् उद्युक्तः। किन्तु दौर्भाग्यवशात् तदा मम एकः पादः एव नष्टः। स्वग्रामस्य अभिमानेन मम शेषायुष्यम् अत्र यापयन् अस्मि। मम केचन कर्मकराः सन्ति। ते महाराजसम्बन्धि-विषयान् तदा तदा मां सूचयन्ति। मार्जारादिविषये चिन्तनं परित्यज्य भवान् राजधानीं गच्छतु। परिश्रमेण राजकुमार्याः दुष्कार्यं स्थगयतु" इति।

तदा वीरभद्रः– "भोः, कृपया आशिषा अनुगृह्णातु। अहम् इदानीम् एव राजधानीं गच्छामि" इति उक्तवान्।

"साधु वत्स! भवतः धैर्यं प्रशंसनीयम्" इति वृद्धः प्रीत्या वीरभद्रम् उक्तवान्।

वीरभद्रः मुखम् अवनमय्य मौनं स्थितवान्। तदा सः वृद्धः एव पुनः पृष्टवान्– "भवतु। मासात् पूर्वम् अस्मिन् राज्ये या दारुणा घटना प्रवृत्ता, तस्याः विषये जानाति वा भवान्?" इति।

"आम्, जानामि। महाराजः यदा समुद्रविहारार्थं गतवान्, तदा नौकायाः अपघातेन बहवः जनाः मरणं प्राप्तवन्तः इति वार्ता तु सर्वैः ज्ञाता एव अस्ति। ऋते एतस्याः, अन्या काऽपि घटना प्रवृत्ता वा?" इति आश्चर्येण पृष्टवान् वीरभद्रः।

तदा वृद्धः उक्तवान्– "नहि इतोऽपि अधिकं विषयं भवान् न जानाति इति मन्ये। वदामि, शृणोतु– महाराजस्य एका एव पुत्री।

अनन्तरदिने वीरभद्रः राजधानीं प्रति प्रस्थितः। सायङ्काले सः राजभवनं प्राप्तवान्। 'अहं राजकुमार्याः प्रश्नानाम् उत्तरं दातुम् आगतः अस्मि' इति राजकुमार्याः सेविकाम् उक्तवान् च।

"योग्यम् उत्तरं यदि न वदति, तर्हि किं भविष्यति इति भवान् जानाति वा?" इति पृष्टवती राजकुमार्याः सेविका।

"मकराणाम् आहाररूपेण मम अर्पणं भवेत् इति जानामि अहम्" इति निर्भयम् उक्तवान् वीरभद्रः।

तदा उभे सेविके आगत्य वीरभद्रस्य नेत्रद्वयं वस्त्रेण बद्धवत्यौ। तम् एकं प्रकोष्ठं नीत्वा उक्तवत्यौ– "इदानीम् नेत्र-बन्धनवस्त्रम् अपनयतु" इति।

वीरभद्रः यदा नेत्रस्य वस्त्रम् अपनीतवान्, तदा पुरतः सिंहासने उपविष्टां राजकुमारीम् अलकां दृष्टवान्। यद्यपि तस्याः सौन्दर्यम् अपूर्वम्, तथापि तस्याः मुखे विषादः स्पष्टं दृश्यते स्म।

वीरभद्रं दृष्ट्वा अलका नीरसभावेन उक्तवती– "आकाशस्य अपेक्षया अपि विशालं किम्? समुद्रापेक्षया अपि गभीरं किम्? नवनीतस्य अपेक्षया अपि मृदु किम्? एतेषां त्रयाणाम् अपि प्रश्नानाम् एकम् एव उत्तरं वक्तव्यं भवता" इति।

वीरभद्रः महता आश्चर्येण अलकां पश्यन् 'स्त्रीहृदयम्" इति उत्तरम् उक्त्वा– "हे



राजकुमारि, कीदृशाः अल्पाः प्रश्नाः एते? यदि परीक्षा करणीया इति अस्ति, तर्हि इतोऽपि कठिनाः प्रश्नाः खलु प्रष्टव्याः भवत्या" इति उक्तवान्।

तदा अलका उक्तवती– "अहं यदि स्वतन्त्रा स्याम् तर्हि एतादृशान् प्रश्नान् न पृच्छेयम्। एकः दुष्टः मद्द्वारा एतत् कारयन् अस्ति। समाधानं यादृशं वा भवतु, सः तृप्तः न भवति। प्रश्नानाम् उत्तरं दातुं ये आगच्छन्ति तान् सः मकरेभ्यः ददाति। अतः भवान् मकरस्य आहारः भविष्यति एव" इति।

अनुक्षणं वीरभद्रः कोपेन मुष्टिं प्रदर्शयन् उक्तवान्– "राजकुमारि! सः दुष्टः कः इति



वदतु। सः यावत् वा शक्तिमान् भवतु, क्षणे एव तं मारयिष्यामि'' इति।

''भवान् समर्थः बुद्धिमान् इव च दृश्यते'' इति वदन्ती राजकुमारी आत्मना महाराजेन च कीदृशी विषमपरिस्थितिः प्राप्ता अस्ति इति वक्तुम् उद्युक्ता अभवत्।

''एकस्मात् मासात् पूर्वम् अहं पित्रा सह समुद्रविहारार्थं गतवती आसम्। तस्मिन् समये सेनापतिः क्रूरवर्मा अपि तत्र आसीत्। नौकायाः चालकाः सर्वे अपि क्रूरवर्मणः आत्मीयाः एव। सेनापतिः दुरुद्देशेन एव तत्र आगतवान् अस्ति इति तेषां परस्पर-वार्तालापश्रवणात् मया ज्ञातम्। ते नौकाम् एकस्य लघुद्वीपस्य समीपं नीतवन्तः। तत्र क्रूरवर्मा एकस्यां गुहायां महाराजं बन्धने स्थापयित्वा राजकुमारीं मां राजभवनं प्रत्यानीतवान्। अनन्तरं सः— 'प्रमादवशात् नौका समुद्रे निमग्ना। वयं महाराजं रक्षितुं न शक्ताः। राजकुमारीं केवलं रक्षितुं शक्ताः' इति राज्ये सर्वत्र प्रचारं कृतवान्। इदानीं सः प्रश्नत्रयं निर्माय, ये उत्तरं दातुम् आगच्छन्ति तान् मकरेभ्यः अर्पयति। अन्ते मां परिणीय स्वयं राजा भवितुम् इच्छति।

ह्यः रात्रौ बहुकालं मम निद्रा न आगता इति कारणतः अहम् उद्यानं गतवती आसम्। तत्र सेनापतिः स्वस्य आत्मीयेन सेवकेन दुष्टबुद्धिना सह सम्भाषणं कुर्वन् आसीत्। एकस्य गुल्मस्य पृष्ठतः स्थित्वा अहं तयोः सम्भाषणं श्रुतवती।

सेनापतिः दुष्टबुद्धिं वदन् आसीत्— ''श्वः प्रातः भवान् समुद्रमध्यस्थं द्वीपं गच्छतु। तत्र ये रक्षणकार्ये निरताः भवन्ति तान् उद्दिश्य 'अपायः अपगतः' इति सङ्केतवाक्यं वदतु। तदा ते भवता सह महाराजं प्रेषयिष्यन्ति। ततः प्रत्यागमनसमये नौका यदा समुद्रमध्ये भविष्यति तदा भवान् महाराजं समुद्रे पातयतु। परश्वः उत्तमे मुहूर्ते अहं राजकुमारीं परिणीय सिंहासनारोहणं करिष्यामि। मम साहाय्यं कृतवन्तं भवन्तं मन्त्रिपदव्यां सेनापतिपदव्यां वा नियोजयिष्यामि'' इति।

एवम् अस्ति मदीया स्थितिः। अग्रे किं

करणीयम् इत्येव न ज्ञायते'' इति स्वकथाम् उक्तवती राजकुमारी।

''अहो देशद्रोहिता क्रूरवर्मणः! एतादृशान् अपि एषा भूमिः धरति खलु इति तु महदाश्चर्यकरम्!'' इति उक्तवान् वीरभद्रः।

''सः क्रूरवर्मा नररूपी राक्षसः। अद्य सायङ्कालसमये सः मकरेभ्यः भवन्तम् अर्पयितुम् अत्र आगमिष्यति। भवान् इदानीम् एव इतः गत्वा अपायनिवारणार्थं कमपि उपायं चिन्तयतु। सायं क्रूरवर्मा यदा आगमिष्यति तदा अहं वदामि यत् उत्तरं तृप्तिकरं न जातम् इति यदा ज्ञातं तदा भवान् गवाक्षमार्गेण पलायनं कृतवान् इति। अविलम्बेन गच्छतु भवान्'' इति उक्तवती अलका।

अनन्तरक्षणे एव वीरभद्रः गवाक्षमार्गेण बहिः गत्वा उद्यानम् अतिक्रम्य समुद्रतीरं प्राप्तवान्। अनन्तरदिने उषःकाले एव सः कस्मैचित् धीवराय प्रभूतं धनं दत्त्वा तस्य साहाय्येन राजबन्धनस्थलं द्वीपं प्राप्तवान् वीरभद्रः।

यदा वीरभद्रः द्वीपे पदम् अर्पितवान् तदा महान्तम् उष्णीषं धृतवान् कश्चन दृढकायः पुरुषः हस्तेन खड्गं गृहीत्वा वीरभद्रसमीपम् आगत्य– ''अये, कः भवान्? समुद्रचोरः वा भवान्? किमर्थम् अत्र आगमनम्?'' इति दर्पमिश्रितेन स्वरेण पृष्टवान्।

वीरभद्रः तु अल्पाम् अपि भीतिम्




अननुभवन् उच्चध्वनिना ''अपायः अपगतः'' इति उक्तवान्।

एतत् सङ्केतवचनं श्रुत्वा आश्चर्यम् अनुभवन् सः उष्णीषधारी– ''अहो, कथम् एतत्! एतत् सङ्केतवचनम् अहं, सः दुष्टः दुष्टबुद्धिः चापि जानीवः स्म खलु? भवान् कथम् एतत् वचनं ज्ञातवान्?'' इति पृष्टवान्।

तदा वीरभद्रः कोपेन– ''अये मूर्ख! दुष्टः दुष्टबुद्धिः इति न, आर्यः दुष्टबुद्धिवर्यः इति वदतु। अत्र आगमनसमये समुद्रे अल्पः अपघातः जातः। तदा मम खड्गादयः समुद्रे पतिताः। अन्यथा एतावता भवतः शिरः शरीरात् पृथग्भूय अधः अपतिष्यत्। दुष्टबुद्धिवर्यः एव भाविराजः। अतः तद्विषये

लघुवचनस्य अकथनम् एव भवतः क्षेमाय" इति उक्तवान्।

"दुष्टबुद्धिः राजा भविष्यति इति? कथम् एतत्?" इति आश्चर्येण पृष्टवान् क्रूरवर्मा।

"भोः, क्रूरवर्मन्! सर्वं विस्तरेण शृणोतु। ह्यः रात्रौ भवता यत् भोजनं कृतं तत्र दुष्टबुद्धिना घोरं विषं योजितम् आसीत्। द्वादशघण्टानाम् अनन्तरं तच्च विषं परिणामं जनयिष्यति। अतः अल्पेन एव कालेन तत् विषं भवन्तं यमलोकं प्रापयिष्यति" इति यावत् वीरभद्रः उक्तवान् तावता सः उष्णीषधारी चीत्कृत्य वमनं कुर्वन् मूर्च्छां प्राप्य अधः अपतत्। वीरभद्रः रक्षकभटान् आज्ञामात्रेण भाययन् महाराजं बन्धविमुक्तं कृतवान्। क्रूरवर्मा च रज्ज्वा बद्धः।

ततः सर्वे प्रतिप्रस्थिताः। नौकायाम् उपविष्टः राजा वीरभद्रमुखात् प्रवृत्तं समग्रं श्रुत्वा क्रूरवर्माणं प्रदर्शयन् वीरभद्रं पृष्टवान्– "एषः एवः राजद्रोही क्रूरवर्मा इति कथं ज्ञातं भवता?" इति।

तदा वीरभद्रः उक्तवान्– "महाराज! अहं राजभवनात् पलायितः इति यदा ज्ञायते तदा, अहं कानिचन रहस्यानि जानीयाम् एव इति चिन्तयित्वा क्रूरवर्मा अत्र द्वीपम् आगच्छेत् एव' इति मया ऊहितम् आसीत्। तावदेव न, यदा मया सङ्केतवचनम् उक्तं तदा एतेन उक्तं यत् एतत् वचनं दुष्टबुद्धिः अहं च जानीवः, न अन्यः इति। तदा एव मया निर्णीतं यत् एषः एव देशद्रोही क्रूरवर्मा इति। अतः विषप्रयोगः कृतः अस्ति इति मिथ्यावचनम् उक्तम्। विषप्रयोगभीत्या एव एषः मूर्च्छां गतः" इति।

राजा वीरभद्रस्य बुद्धिमत्तां, धैर्यं, साहसप्रवृत्तिं च बहुधा श्लाघितवान्। अनन्तरदिने राजसभायां प्रवृत्तं समग्रं निवेद्य– "एतस्य वीरभद्रस्य कारणतः एव देशस्य अपायः अपगतः। अतः एतस्मै वीराय एव अहं मम पुत्रीं दास्यामि। एतं सिंहासने उपवेश्य पट्टाभिषेकं च करिष्यामि" इति उक्तवान्। सभासदः हर्षध्वनिं कृतवन्तः।






## २

(माणिक्यपुर्यां प्रवृत्तस्य वसन्तोत्सवस्य निमित्तम् आयोजितासु स्पर्धासु उत्तुङ्गः नाम कश्चन अटविककुलीयः बह्वीषु स्पर्धासु जयं प्राप्तवान्। युवराज्ञ्यै प्रियंवदायै उपायनरूपेण पुष्पगुच्छम् अर्पितवान् च। युवराज्ञ्याः अपेक्षायाः अनुगुणं राजा तस्य पुष्पस्य सस्यम् आनेतुं भटौ प्रेषितवान्। तौ पुष्पमात्रम् आनेतुं शक्तवन्तौ। तानि पुष्पाणि अशुभसूचकानि इति उक्तवान् राजगुरुः। तदनन्तरम्....)

राजगुरोः वचनं श्रुतवतः महाराजस्य नितराम् आश्चर्यं जातम्। 'पुष्पाणां वार्ता एतेन कथं ज्ञाता? कर्णाकर्णिकया यत् श्रुतं तस्मिन् विश्वस्य किमपि वक्तुम् आगतं वा एतेन? एवं न स्यात्। आमूलाग्रं परिशीलनम् अकृत्वा राजगुरुः प्रायः किमपि न वदति। राजपरिवारस्य हितेच्छुः सः अविचिन्त्य किमपि न वदेत् एव। आस्तां तावत्। वृथा चिन्तनेन किम्? राजगुरोः मुखात् एव सर्वं श्रूयेत' इति चिन्तितवान् राजा प्रतापवर्मा।

सः राजगुरुं पश्यन् उक्तवान्– "श्रीमन्! तानि अपूर्वाणि सुगन्धयुक्तानि पुष्पाणि अशुभसूचकानि वा? कथम् एतत्? मया तु किमपि न ज्ञायते" इति।

"एतद्विषये विस्तरेण कथयिष्यामि। एतानि पुष्पाणि उभाभ्यां सैनिकाभ्याम्



आनीतानि इति श्रुतं मया। तौ भटौ किमर्थम् ईशान्यदिशि गतवन्तौ? ईशान्यप्रान्ते कलहः विद्रोहकार्यं वा किमपि न आसीत् खलु?'' इति पृष्टवान् राजगुरुः गौरीनाथः।

''भगवतः दयया देशे कुत्रापि कलहः विद्रोहः वा न प्रचलति। देशे प्रजाः सुखेन शान्त्या च सन्ति'' इति उक्त्वा स्पर्धादिने प्रवृत्तं निवेद्य सैनिकाभ्याम् आनीतां वार्ताम् अपि संक्षेपेण श्रावितवान् राजा।

सर्वं श्रुत्वा राजगुरुः पृष्टवान्– ''तानि पुष्पाणि इदानीं कुत्र सन्ति?'' इति।

''युवराज्ञ्याः भवने सन्ति। एतावता अपि तानि अम्लानानि एव सन्ति। सदा सुगन्धं प्रसारयन्ति अपि'' इति उक्तवान् राजा।

''तानि पुष्पाणि एतत्क्षणे एव भवनात् अपसारयन्तु। यदि तानि राजभवने एव स्युः तर्हि राजकुटुम्बस्य अनिष्टं निश्चितम्। अतः एतं विषयं राजकुमारीं निवेद्य पुष्पाणि अपनयन्तु'' इति उक्तवान् राजगुरुः।

''भवतः आदेशं शिरसा वहामि श्रीमन्!'' इति उक्त्वा राजा क्षणकालस्य मौनस्य अनन्तरं– ''श्रीमन्! तानि पुष्पाणि अशुभसूचकानि इति भवता किमर्थम् उच्यते इति ज्ञातव्यम् इति मम महत् कुतूहलम्। युवराज्ञी प्रियंवदा तु तानि पुष्पाणि प्राणसमानि भावयति। अतः पुष्पाणां विषये वस्तुस्थितिः तया अपि ज्ञाता चेत् वरम् इति अहं भावयामि। ताम् अत्र आह्वातुम् अनुज्ञा दातव्या कृपया'' इति प्रार्थितवान्।

अङ्गीकारपूर्वकं शिरश्चालनं कृतवान् राजगुरुः। अनन्तरं राज्ञा युवराज्ञी आनायिता। युवराज्ञी राजगुरुम् अभिवन्दितवती। राजगुरुः ताम् आशिषा अनुगृह्य पार्श्वस्थम् आसनं प्रदर्शयन् हस्तसङ्केतेन उपवेशनं सूचितवान्। युवराज्ञी आसने उपविष्टवती। प्रश्नार्थक-दृष्ट्या पितरं दृष्टवती च।

''शताब्दिकानामकम् अपूर्वं पुष्पं प्राप्तं खलु? तद्विषये कांश्चन प्रमुखान् अंशान् वक्तुं राजगुरुः उपस्थितः अस्ति। ते विषयाः भवत्या अपि ज्ञाताः चेत् वरम् इत्यतः भवतीम् अपि अत्र आहूतवान्'' इति पुत्रीम् उक्तवान्

महाराजः।

'के ते विषयाः?' इति पृच्छन्ती इव राजगुरुं दृष्टवती युवराज्ञी। क्षणकालस्य मौनस्य अनन्तरम् उक्तवान् राजगुरुः—

"अपूर्वं सौगन्ध्यं प्रसारयत् एतत् पुष्पं प्राचीने काले इतरपुष्पाणि इव प्रतिवर्षं विकसति स्म। बहूनां दिनानाम् अनन्तरम् अपि म्लानताम् अप्राप्य तिष्ठति स्म। तत्काले भवद्वंशीयः चन्द्रकान्तवर्मा नाम राजा माणिक्यपुरीं पालयति स्म। धर्मप्रभुः इति, साहसमूर्तिः इति च तेन कीर्तिः प्राप्ता आसीत्। तस्य चन्द्रकेतुः नाम सहोदरः आसीत्। स तु स्वभावेन अग्रजविरुद्धः। राजकार्यादिषु अग्रजस्य साहाय्यं किमपि अकुर्वन् सर्वत्र अटन् कालं यापयति स्म सः। एवम् अटन् सः कदाचित् राज्यस्य उत्तरदिशि स्थितं पर्वतप्रदेशं प्राप्तवान्।

तत्र सः पर्वतकुलीयानां परिचयं प्राप्तवान्। तेषु नागेशः नाम कश्चित् मन्त्रतन्त्रज्ञः आसीत्। तस्य स्नेहं सम्पाद्य चन्द्रकेतुः विविधाः मन्त्रतन्त्रविद्याः प्राप्तवान्।

कदाचित् सः मान्त्रिकः नागेशः विचित्राणि कानिचन पुष्पाणि आनीय क्वथति जले स्थापयित्वा किमपि कुर्वन् आसीत्। एतत् दृष्टवान् चन्द्रकेतुः। सः मान्त्रिकः तत् जलं प्रतिदिनं क्वथयन् सुगन्धयुक्तम् एकम् अपूर्वं तैलं सज्जीकृतवान्। 'एतत् तैलं यस्य उपरि



वयं पातयामः सः अस्मद्वशः भूत्वा अस्माकं वचनं पालयिष्यति' इति चन्द्रकेतुम् उक्तवान् सः मान्त्रिकः। चन्द्रकेतुः महता उत्साहेन तानि अपूर्वाणि पुष्पाणि सङ्गृह्य माणिक्यपुरीम् आगतवान्। अनन्तरं तेन मान्त्रिकेण यथा सूचितं तथा रहसि तानि पुष्पाणि जले स्थापयित्वा, क्वथनं कृत्वा केषुचित् एव दिनेषु वशीकरणतैलं सज्जीकृतवान् चन्द्रकेतुः।

साधारणजनस्य उपरि एतत् तैलं पातयित्वा वशीकरणत्वं परीक्ष्य अन्ते राज्ञः उपरि अपि पातयित्वा राजानं वशीकृत्य स्वयं सिंहासनम् आरोढव्यम् इति चन्द्रकेतोः विचारः आसीत्।



सर्वं शृण्वती स्थिता राजकुमारी मध्ये राजगुरुं पृष्टवती— "तस्य योजना सफला न जाता खलु?" इति।

"सम्यक् ऊहितं भवत्या। चन्द्रकेतोः कुतन्त्रं न फलितम्। तम् एव विषयं विस्तरेण श्रावयामि। शृणोतु तावत्" इति उक्त्वा राजगुरुः कथनम् अनुवर्तितवान्—

"तस्मिन् काले कुलश्रेष्ठः नाम कश्चित् राजवंशीयानां कुलदेवतायाः अर्चकः आसीत्। तस्य काचित् पुत्री आसीत्, यस्याः सौन्दर्यम् अपूर्वम् आसीत्। तस्याः नाम भाग्या इति। तां कदाचित् दृष्टवान् चन्द्रकेतुः। तस्याः सौन्दर्येण आकृष्टः सः, 'एषा अर्चकस्य पुत्री' इत्यपि विस्मृत्य, वशीकरणतैलेन तां वशीकर्तुम् इष्टवान्।

कदाचित् भाग्या सखीभिः सह नदीं गत्वा स्नात्वा देवालयं प्रति आगच्छन्ती आसीत्। तत्समये चन्द्रकेतुः वृक्षस्य पृष्ठतः स्थित्वा आत्मना सज्जीकृतं वशीकरणतैलं तस्याः उपरि पातितवान्। तदा भाग्या उच्चैः चीत्कारं कुर्वती इतस्ततः धावितुम् उद्युक्ता अभवत्। भाग्यायाः किं जातम् इति अजानत्यः सख्यः तां ग्रहीतुं काश्चन उद्युक्ताः। पुनः काश्चन अर्चकं वार्तां निवेदयितुं देवालयं प्रति गतवत्यः। अन्याः काश्चन 'तैलपात्रं गृहीत्वा धावितुम् उद्युक्तं चन्द्रकेतुं गृह्णन्तु' इति उच्चध्वनिना आक्रोशनं कृतवत्यः। तदा मार्गे गच्छन्तः केचन चन्द्रकेतुं गृहीत्वा देवालयं प्रति नीतवन्तः।

तत्समये अर्चकः देव्याः विग्रहस्य अलङ्करणे मग्नः आसीत्। महिलानां कोलाहलं श्रुत्वा सः गर्भगृहात् बहिः आगतवान्। तत्रत्यां स्थितिं दृष्ट्वा सः नितरां दिग्भ्रान्तः। झटिति पुत्र्याः समीपं गत्वा पुत्रीं गृहीत्वा— "वत्से! किं जातं भवत्याः?" इति पृष्टवान् सः।

भाग्यायाः मुखात् किमपि वचनं न निर्गतम्। सा क्षणकालम् इतस्ततः पश्यन्ती मूर्च्छां गता अधः पतितवती। तदा तया सह स्थिताः सख्यः— "नदीतः आगच्छन्त्याः भाग्यायाः उपरि एषः मनुष्यः कमपि रसं

पातितवान्। तस्मात् क्षणतः एषा उन्मादिनी इव व्यवहरन्ती अस्ति" इति उक्त्वा जनानां मध्ये स्थितं चन्द्रकेतुम् अर्चकस्य पुरतः उपस्थापितवत्यः।

अर्चकः तस्य समीपं गत्वा कोपेन पृष्टवान्– "कः भवान्? मम पुत्रीं किं कृतवान्?" इति।

"श्रीमन्! एषा भवतः पुत्री इति अजानता मया अपराधः कृतः। अटविकस्य मान्त्रिकस्य उपदेशस्य अनुगुणम् अहम् अपूर्वपुष्पाणां साहाय्येन वशीकरणतैलं सज्जीकृतवान्। तस्य तैलस्य प्रभावः परीक्ष्य ज्ञातव्यः इति उद्देशेन एतस्याः युवतेः उपरि प्रयोगं कृतवान्। एषा भवतः पुत्री इति अजानता मया कृतः अपराधः एषः। क्षन्तव्यः अहम्" इति क्षमां प्रार्थितवान् चन्द्रकेतुः।

किन्तु अर्चकः एतत् अशृण्वन् इव देवालयस्य अन्तः गतवान्। देव्याः कण्ठे स्थितं हारम् आनीय बहिः आगत्य– "अम्ब! अनन्यगतिकतया भवत्याः पूजां कुर्वन् अहम् अद्यावधि आत्मनिमित्तं किमपि न प्रार्थितवान्। तथापि अद्य मम पुत्र्या प्राप्तां दुर्दशां पश्यतु। एतस्याः रक्षणभारः भवत्याः। यः मम पुत्रीम् एतादृशीं दुर्दशां प्रापितवान् सः नररूपी राक्षसः नाशं प्राप्नोतु। भवत्याः भक्तस्य पुत्र्याः कष्टस्य कारणीभूतं तत् पुष्पं पुनः विकसितं मा भवतु" इति वदन् पुष्पहारं छित्वा कोपेन चन्द्रकेतोः उपरि पातितवान्।

अनन्तरक्षणे एव अर्चकस्य पुरतः किञ्चन





अपूर्वं तेजः आविर्भूतम्। ततः कुलदेवतायाः रूपं प्रत्यक्षं जातम्। कुलदेवता मन्दहासपूर्वकम्– "वत्स! भवतः प्रार्थना श्रुता मया। भवतः पुत्र्याः काऽपि हानिः न भविष्यति। सा अचिरात् एव यथापूर्वं भविष्यति। यः हानिं कृतवान् सः नररूपी राक्षसः इति उक्तवान् भवान्। अतः सः इतः परं पिशाचरूपं प्राप्स्यति। यद्यपि तेन पुष्पेण स्वयं किमपि न कृतं, तथापि दुष्कृत्ये उपकारकं जातम्। अतः तत् पुष्पं भवता यथा इष्टं तथा, इतः परं न विकसिष्यति। यदि विकसिष्यति तर्हि अपि ये तस्य उपयोगं प्राप्तुम् इच्छन्ति ते कष्टं सम्मुखीकरिष्यन्ति। अस्तु तावत्, गतं न शोचयेत् प्राज्ञः। सर्वं विस्मरतु। देवालयस्य अन्तः गच्छतु। नीराजनस्य समयः आसन्नः। अन्तः आगच्छतु तावत्" इति, अर्चकः यथा शृणुयात् तथा उक्त्वा ततः अदृश्या अभवत्। देव्याः रूपम् अपि अर्चकेन केवलं दृष्टं, न अन्येन।

अर्चकः शान्तमनस्कः सन् अन्तः गत्वा नीराजनं समाप्य बहिः आगतवान्। तावता एव सचेतनतां प्राप्तवती भाग्या मन्दहासपूर्वकम् आगत्य पितुः पार्श्वे स्थितवती। तत्रत्याः सर्वे उक्तवन्तः यत् सः दुष्टः चन्द्रकेतुः पिशाचरूपं प्राप्य इतः कुत्रापि निर्गतवान् इति।

प्रवृत्तं सर्वं श्रुत्वा राजा चन्द्रकान्तवर्मा अनुजेन कृतस्य अपराधस्य निमित्तं परमां लज्जां प्राप्तवान्।

अनन्तरं सः अर्चकसमीपम् आगत्य पश्चात्तापं प्रकटयन् क्षमां प्रार्थितवान्। ततः अर्चकम् उक्तवान् सः– "भवतः पुत्री यदा किञ्चित् स्वस्था भविष्यति तदा तां राजभवनं प्रति प्रेषयतु। मम पुत्र्या सह कानिचन दिनानि यावत् निवसन्ती सा उत्साहं प्राप्स्यति" इति।

राजगुरुः एवं कथां समाप्य पुनः उक्तवान्– "एते सर्वे विषयाः मया चन्द्रकान्तवर्ममहाराजस्य जीवनं विवृण्वतः ताडग्रन्थस्य साहाय्येन ज्ञाताः। देव्याः शापस्य पात्रं तत् पुष्पं शते वर्षेषु एकवारं विकसति इति, तस्य नाम 'शताब्दिका' इति अस्ति इति च मया श्रुतम् आसीत्। इदानीं

राजकुमार्या अपूर्वं पुष्पं प्राप्तं यत् तस्य दर्शनात् मया पूर्वतनघटनाः स्मृताः। प्रजानां हितस्य, राजपरिवारस्य हितस्य च चिन्तनं मम कर्तव्यम् इत्यतः अहम् अत्र आगतः। अतः एव वस्तुस्थितिः निवेदिता अस्ति मया'' इति।

क्षणकालं यावत् तत्रत्याः सर्वे मौनम् आश्रितवन्तः। ततः राजा प्रतापवर्मा पुत्रीं पश्यन् उक्तवान्– ''वत्से, प्रियंवदे! एतानि पुष्पाणि राजभवने न भवेयुः इति राजगुरोः आज्ञा अस्ति खलु? अतः तानि इतः अपसारयतु'' इति।

''तथैव करोमि तात! इदानीम् एव तेषाम् अपनयनार्थं व्यवस्थां करिष्यामि'' इति पितरम् उक्त्वा राजगुरुं पश्यन्ती प्रियंवदा उक्तवती– ''अपूर्वं सौगन्ध्यं प्रसारयतः एतस्य पुष्पस्य एतादृशी विषादकथा अस्ति इति तु महाश्चर्यकरम् एव'' इति।

तावता कश्चन भटः आगत्य राजानं निवेदितवान्– ''प्रभो, सेनाधिपतिः भवद्दर्शनाकांक्षी द्वारे तिष्ठति'' इति।

''तम् अन्तः प्रवेशयतु'' इति उक्तवान् राजा।

भटस्य निर्गमनस्य अनन्तरं सेनाधिपतिः अन्तः आगत्य राजानं राजगुरुं चापि नमस्कृत्य पार्श्वे स्थितवान्।

''कः विशेषः? भवतः दर्शनात् ज्ञायते यत् महती समस्या उपस्थिता अस्ति इति'' इति



पृष्टवान् राजा।

''प्रभो, महती समस्या उपस्थिता अस्ति। अद्य प्रातः आरभ्य अस्मद्देशस्य दक्षिणप्रान्ते स्थिताः जनाः गृहादिकं परित्यज्य भीत्या धावन्तः सन्ति। केचन राजधानीं प्रति आगताः सन्ति। समुद्रतीरे स्थितानि गृहाणि सर्वाणि नष्टानि सन्ति। समुद्रः तु यथापूर्वं शान्तः एव आसीत्। गृहनाशसमये कोऽपि शब्दः केनापि न श्रुतः इति श्रूयते। सौभाग्यवशात् कस्यापि प्राणहानिः न जाता इति वार्ता श्रुता। किमर्थम् एवं प्रवर्तते इति तु केनापि न ज्ञायते'' इति उक्तवान् सेनापतिः गम्भीरवर्मा।

''तदस्तु। एतस्याः वार्तायाः श्रवणस्य

अनन्तरं किं किं कृतम्?" इति पृष्टवान् राजा।

"एतावता एव समुद्रतीरे केचन भटाः रक्षणार्थं नियोजिताः सन्ति। यः सन्देहास्पदं व्यवहरति सः बन्धनीयः इति आज्ञां कृतवान् अस्मि। कष्टग्रस्तानां प्रजानां साहाय्यार्थम् एकं सैन्यदलं प्रेषितवान् अस्मि। ये राजधानीं प्रति आगच्छन्ति तेषां सान्त्वनं कृत्वा, तेषां निमित्तं व्यवस्थापितं वसतिशिबिरं प्रति तेषां नयनार्थं पुनः केचन सैनिकाः नियोजिताः सन्ति। एवं सर्वं व्यवस्थाप्य वार्तां निवेदयितुं भवत्समीपम् उपस्थितः अस्मि" इति उक्तवान् सेनाधिपतिः।

"येषां गृहं नष्टं तादृशानां केषाञ्चित् वासः अस्मत्प्रासादे अपि भवितुम् अर्हति खलु? महिलाः बालान् च अत्र प्रेषयन्तु" इति उक्तवती युवराज्ञी प्रियंवदा।

"योग्या सूचना एषा। राजभवनस्य कस्मिन् पार्श्वे तेषां वासः भवतु इति, विशेषपाकव्यवस्था कथं भवेत् इति च भवती एव निर्णीय यथायोग्यं व्यवस्थां करोतु। तेषां सान्त्वनं कृत्वा योगक्षेमव्यवस्थां निर्वहतु भवती" इति पुत्रीम् उक्त्वा राजा सेनापतिं पश्यन् उक्तवान्– "विपद्ग्रस्तानां निमित्तं कृतायां व्यवस्थायां कोऽपि लोपः यथा न भवेत् तथा परिशीलयतु भवान्। तेषाम् अग्रिमजीवनार्थं कः उपायः इति पुनः चिन्तयिष्यामः" इति।

पुनः राजगुरुं पश्यन् पृष्टवान् सः– "श्रीमन्! एतद्विषये अन्यत् किमपि करणीयम् अस्ति वा?" इति।

"सर्वं सम्यक् विचिन्त्य आज्ञा कृता अस्ति भवता। सेनापतिना अपि समये योग्यः निर्णयः आश्रितः, योग्या व्यवस्था कृता च। सेनाधिपतिना आनीतायाः वार्तायाः श्रवणात् मम भासते यत् शताब्दिकापुष्पप्राप्त्या यत् सम्भवेत् इति मया ऊहितम् आसीत् तत् सम्पद्यमानम् एव अस्ति इति। अहो दुर्विधिः!" इति महता विषादेन उक्तवान् राजगुरुः। —(अनुवर्तते)






# पाठनकौशलम्

आरब्धं प्रयत्नं त्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– ''अये राजन्! एतस्यां रात्रौ, भीकरे श्मशाने, भवान् महता श्रमेण एतत् कार्यं कुर्वन् अस्ति यत् तत् किम् आत्मतृप्त्यर्थम् उत अन्यतोषणार्थम्? अन्यसन्तोषार्थं चेत् मदीयं हितवचनं किञ्चित् शृणोतु। मानवाः कदाचित् ज्येष्ठानाम् आदेशस्य अनुगुणं कार्ये प्रवर्तन्ते चेदपि स्वप्रयत्नेन एव फलं प्राप्नुवन्ति। फलप्राप्तिं दृष्ट्वा ज्येष्ठाः सगर्वं वदन्ति यत् अस्माकं मार्गदर्शनतः एव एतत् सिद्धम् इति। कार्यसाधकः एतत् निराकरोति चेत् अपि ते कार्यसाधकस्य प्रयत्नम् अप्रकाशयन्तः स्वचातुर्यं ख्यापयन्तः कीर्तिं प्राप्नुवन्ति। एवं

# वेतालकथा



च सिद्धं यत् कश्चित् कार्यसाधकः भवति, किन्तु कीर्तिस्वीकर्ता अन्यः एव भवति इति। अत्र उदाहरणरूपेण धनदत्तस्य कथां श्रावयामि। मार्गायासपरिहारार्थम् एतां कथां श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा—

कस्मिंश्चित् नगरे धनदत्तः नाम वणिक् आसीत्। सः स्वकीयानि वस्तूनि नौकाद्वारा विदेशं प्रेषयित्वा वाणिज्यं करोति स्म। तस्य वाणिज्यं सर्वदा लाभदायकम् एव भवति स्म। एकदा धनदत्तः एकां नौकां क्रीतवान्। कदाचित् वाणिज्यसमये तस्य नौका समुद्रे निमग्ना इति वार्ता आगता। तस्यां नौकायां धनदत्तस्य अन्येषां वणिजां च वस्तूनि आसन्।

धनदत्तः वाणिज्ये लाभं प्राप्तवान् इति केचन वणिजः तम् असूयया पश्यन्ति स्म। ते सर्वे— 'जले निमग्नानां वस्तूनां मूल्यं दातव्यम् भवता' इति धनदत्तं पीडयितुम् आरब्धवन्तः। धनदत्तः तेभ्यः सर्वेभ्यः अपि वस्तूनां मूल्यं दत्तवान्। एतस्मात् कारणात् धनदत्तः अतीव दरिद्रः सञ्जातः।

इदानीं धनदत्तस्य आधीन्ये पञ्चाशत्सहस्ररूप्यकमूल्यस्य एकं भवनं केवलम् अवशिष्टम्। भवनस्य उपरि दशसहस्ररूप्यकाणाम् ऋणम् आसीत्। अतः धनदत्तः— 'भवनस्य विक्रयणं कृत्वा ऋणात् मुक्तः भवामि' इति चिन्तयन् तद्विषये प्रयत्नं कृतवान्। किन्तु सर्वेऽपि विंशति-सहस्ररूप्यकैः एव भवनं क्रेतुम् इच्छन्ति स्म।

एतादृश्यां परिस्थित्यां धनदत्तः पुत्रं देवदत्तम् आहूय उक्तवान्— ''वत्स, इदानीं भवान् युवकः अस्ति। मम साहाय्यं कर्तुं समर्थः अस्ति। किन्तु एतावत्पर्यन्तं भवान् अस्माकं वैभवजीवनं केवलं दृष्टवान्। इदानीं दारिद्र्यस्य कालः सन्निहितः अस्ति। वाणिज्यस्य दायित्वं भवते दास्यामि इति चिन्तयन् आसम्। तावति काले एव एतादृशी परिस्थितिः प्राप्ता। यदि किञ्चित् मूलधनं लभ्येत तर्हि वर्षद्वयाभ्यन्तरे द्विगुणितं धनं सम्पादयेयम्। एतस्मिन् नगरे अस्माकं साहाय्यकाः केऽपि न सन्ति। अतः इदानीं

भवान् अस्माकं स्वग्रामं रत्नपुरं गच्छतु। तत्र अस्माकं बन्धुः कश्चन अस्ति। तस्य नाम चन्द्रशेखरः इति। सः महान् धनिकः। सः केवलम्, अस्माकं साहाय्यं कर्तुं समर्थः। भवान् चन्द्रशेखरं पृष्ट्वा तस्य सकाशात् पञ्चविंशतिसहस्रं रूप्यकाणि आनयतु। तेन धनेन ऋणं प्रत्यर्प्य अवशिष्टेन धनेन कथं वाणिज्यं करणीयम् इति अहं भवन्तं पाठयामि" इति।

देवदत्तः अनुक्षणम् एव प्रयाणार्थं गन्तुं सन्नाहं कृतवान्। तदा धनदत्तः पुनः पुत्रम् उक्तवान्– "भवान् इदानीं प्रस्थानं करोति चेत् सायङ्कालसमये माणिक्यपुरीं प्राप्नोति। तत्र मम प्राणप्रियः स्नेहितः रमाकान्तः अस्ति। भवान् तस्य गृहं गत्वा अद्य रात्रौ तत्रैव तिष्ठतु। रत्नपुर्यां मम बाल्यस्नेहितः विनयसेनः अपि अस्ति। यदि केनचित् कारणेन चन्द्रशेखरः नगरे न भवेत् तर्हि तस्य आगमनपर्यन्तं भवान् विनयसेनस्य गृहे तिष्ठतु। केनाऽपि कारणेन वा रमाकान्तं, विनयसेनं वा धनं मा प्रार्थयतु। यदि भवान् तौ धनं प्रार्थयेत् तर्हि तौ कष्टेन वा धनं दद्याताम्। तयोः कष्टं मास्तु" इति।

पितुः वचनानुसारं देवदत्तः प्रयाणं कुर्वन् माणिक्यपुरीं गत्वा रमाकान्तस्य गृहं गतवान्। रमाकान्तः देवदत्तं प्रीत्या स्वागतीकृतवान्। देवदत्तस्य वृत्तान्तं सर्वं श्रुत्वा रमाकान्तः उक्तवान्– "एतादृशे



कष्टकाले अपि भवतः पिता मम सकाशात् धनं स्वीकर्तुं न इच्छति। अपि तु चन्द्रशेखरं प्रष्टुम् इच्छति। किमर्थं भवतः पिता एवं चिन्तितवान्? भवतः पिता यदा अल्पः बालः आसीत्, तदा एव तस्य मातापितरौ दिवङ्गतौ। तदा चन्द्रशेखरः भवतः गृहे आश्रयं प्राप्तवान्। वञ्चनेन भवतः भूमिं स्वायत्तीकृतवान्। अनन्तरं भवतः पिता दारिद्र्यम् अनुभवन् नगरम् आश्रितवान्। नगरे वाणिज्यं कुर्वन् अभिवृद्धिं प्राप्तवान्। सः चन्द्रशेखरः महान् कृपणः। अतः सः कथं वा भवते धनं दद्यात्?" इति।

तदा देवदत्तः उक्तवान्– "केनचित् कारणेन अपि धनविषये भवान् न प्रष्टव्यः



इति मम पिता उक्तवान् अस्ति'' इति।

तदा रमाकान्तः किञ्चित् विचिन्त्य उक्तवान्– ''भवतः पिता किमर्थं तथा उक्तवान् इति अहं जानामि। भवतः पितुः कष्टकाले अहं साहाय्यं न कृतवान्। तस्य सुखकाले तस्मात् अहं साहाय्यं प्राप्तवान्। भवतः पितुः सकाशात् स्वीकृतानि पञ्चसहस्रं रूप्यकाणि मया प्रत्यर्पणीयानि सन्ति। अस्मिन् कष्टकालेऽपि यदि अहं न ददामि, तर्हि मया कदा प्रत्यर्पणीयानि? अहम् इदानीं धनं दास्यामि। भवान् स्वीकृत्य गच्छतु। इदानीं मम कष्टं नास्ति इति भवतः पितरं वदतु'' इति।

''तर्हि मम प्रतिगमनसमये धनं स्वीकरिष्यामि'' इति यदा देवदत्तः उक्तवान्, तदा रमाकान्तः उक्तवान्– ''यदि मम सकाशात् भवान् धनं न स्वीकुर्यात् तर्हि इतः परं भवतः पित्रे मुखं दर्शयितुम् अपि न शक्नुयाम्'' इति।

देवदत्तः ततः प्रस्थाय रत्नपुरं प्राप्तवान्। किन्तु चन्द्रशेखरः तत्र न आसीत्। पितुः वचनं स्मरन् देवदत्तः विनयसेनस्य गृहं गतवान्। विनयसेनः देवदत्तं प्रीत्या स्वागतीकृतवान्। अनन्तरं देवदत्तसकाशात् आगमनकारणं ज्ञात्वा सः उक्तवान्– ''चन्द्रशेखरः भवतां भूमिं स्वायत्तीकृत्य वर्धयन् अस्ति। तथापि सः न तृप्तः। एतत् सर्वं जानन् अपि भवतः पिता किमर्थं चन्द्रशेखरस्य समीपं भवन्तं प्रेषितवान् इति न ज्ञायते। एतादृशे कष्टकाले यदा भवान् चन्द्रशेखरं धनं पृच्छति तदा न इति कथनम् उचितं न भवति इत्यतः भवतः अत्र आगमनविषयं कथमपि ज्ञात्वा सः नगरं त्यक्त्वा कुत्रापि गतवान् स्यात्। भवतः प्रतिगमनपर्यन्तम् अपि सः न प्रत्यागच्छेत्। भवते यावत् आवश्यकं तावत् धनम् अहम् एव दास्यामि'' इति।

एतत् श्रुत्वा देवदत्तः– ''भवादृशाः सज्जनाः सन्ति अत्र। तथापि मम पिता चन्द्रशेखरस्य एव अवलम्बनं किमर्थं करोति इति न ज्ञायते। माणिक्यपुर्याः रमाकान्तस्य विषये अपि एवमेव उक्तवान् अस्ति मम

पिता" इति वदन् माणिक्यपुर्यां रमाकान्तेन सह प्रवृत्तं वार्तालापम् अपि वर्णितवान्।

तदा विनयसेनः मन्दहासपूर्वकम् उक्तवान्– "एतस्मात् ग्रामात् यः धनसाहाय्यम् इच्छन् भवत्पितुः समीपं गच्छति स्म तस्य साहाय्यम् अवश्यं करोति स्म भवतः पिता। दत्तं धनं न प्रतिपृच्छति स्म। किन्तु भवान् इदानीं कष्टकाले अस्ति। इदानीं अपि यदि अहं साहाय्यं न करोमि तर्हि अस्माकं स्नेहस्य किं मूल्यम्? ऋणस्य प्रत्यर्पणं तु साहाय्यम् इति न परिगण्यते। भवतः पितुः सकाशात् न केवलम् अहम्, अपि तु अस्मिन् ग्रामे बहवः ऋणं स्वीकृतवन्तः। तत् सर्वम् अहं सङ्गृह्य दास्यामि। एतेन मम तु किमपि कष्टं न भवति" इति।

देवदत्तः अनुक्षणं विनयसेनस्य कथनं न अङ्गीकृतवान्। सः दिनद्वयं विनयसेनस्य गृहे स्थितवान्। तथापि चन्द्रशेखरस्य मेलनं न अभवत्। विनयसेनः स्वेन दातव्यम्, ग्रामस्थैः दातव्यं सर्वं योजयित्वा त्रिंशत्सहस्रं रूप्यकाणि देवदत्ताय दत्तवान्। विनयसेनेन दत्तं रमाकान्तेन दत्तं धनं च स्वीकृत्य देवदत्तः स्वगृहं गतवान्। तस्य गृहे कश्चित् वृद्धः आसीत्।

पिता देवदत्तः वृद्धं परिचाययन् उक्तवान्– "एषः चन्द्रशेखरः। रत्नपुरतः कस्यचित् कार्यस्य निमित्तं अत्र आगत्य अस्वास्थ्येन शयनं कृतवान्। अहम् अस्माकं



गृहे एव एतं स्थापयित्वा एतस्मै औषधं दापितवान्। 'आनीतं धनं सर्वं समाप्तम्' इति वदति एषः। अतः एतस्य प्रतिगमनव्ययार्थम् अस्माभिः एव व्यवस्था करणीया। एषः भवतः पितामहः भवति। नमस्करोतु एतम्" इति।

देवदत्तः चन्द्रशेखरं नमस्कृत्य तस्य प्रयाणार्थं सर्वं सज्जीकृतवान्। अनन्तरं स्वेन आनीतं धनं पित्रे दत्त्वा उक्तवान्– "भवतः उत्तमानि मित्राणि बहूनि सन्ति। किन्तु मां एतादृशस्य कृपणस्य चन्द्रशेखरस्य समीपं प्रेषितवान् इति तु आश्चर्याय एव" इति।

तदा धनदत्तः उक्तवान्– "प्रपञ्चस्य व्यवहाराणां सूक्ष्माः विषयाः पाठनीयाः इति

बहुकालतः अहं चिन्तयन् आसम्। चन्द्रशेखरसमीपे भवतः प्रेषणं शिक्षणस्य एकः भागः'' इति।

वेतालः एवं कथां समाप्य उक्तवान्– ''हे राजन्, धनदत्तस्य बहूनि उत्तमानि मित्राणि सन्ति। तथापि सः पुत्रं देवदत्तं कृपणस्य चन्द्रशेखरस्य समीपं प्रेषितवान्। एतत् विवेकरहितं असमयोचितं च इति भाति किल? अपि च स्वकीयं दोषं निराकुर्वन् धनदत्तः वदति यत् प्रापञ्चिकव्यवहारस्य वाणिज्यपद्धतेश्च पाठनार्थम् अहम् एवं कृतवान् इति। एतत् उचितं समाधानम् इति न भाति। यद्यपि पुत्रः एव कार्यं साधयित्वा आगतवान्, तथापि स्वप्रयत्नः एव अत्र कारणम् इति मन्यमानस्य धनदत्तस्य कर्तव्यनिष्ठायाः लोपः इति भाति किल! एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''धनदत्तः जीवनस्य रहस्यं सम्यक् जानाति। 'कृपणतः चन्द्रशेखरतः धनम् आनयतु' इति उक्त्वा सः पुत्रं प्रेषितवान्। एतेन धनदत्तस्य उत्तमैः मित्रैः ज्ञातम् यत् सः इदानीं कष्टकाले अस्ति इति। कष्टकालेऽपि मित्राणि धनम् अपृष्ट्वा चन्द्रशेखरस्य समीपं पुत्रं प्रेषितवान् इत्यतः धनदत्तस्य विषये तेषां गौरवं द्विगुणितं जातम्। अतः धनदत्तेन न पृष्टं चेत् अपि स्वयं धनं दत्त्वा 'वयम् उत्तमानि मित्राणि' इत्यंशं ते निरूपितवन्तः। एवं धनदत्तः रमाकान्तेन सह विनयसेनेन सह च स्नेहं वर्धयितुम् एव चन्द्रशेखरस्य साहाय्यं स्वीकृतवान्। एतैः कारणैः ज्ञायते– धनदत्तेन पुत्रविषये कृते व्यवहारे कोऽपि लोपः सर्वथा नास्ति इति'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# विस्मरणतन्त्रम्

कश्चन भूस्वामी पूर्वम् आसीत्। तस्य नाम लक्ष्मीपतिः। सः यथेष्टम् ऋणं करोति स्म। ऋणस्य प्रत्यर्पणसन्दर्भः यदा आगच्छति तदा 'इदानीं धनं नास्ति' इति उक्त्वा जनान् वञ्चयति स्म।

एकस्मिन् दिने लक्ष्मीपतिः स्नेहितैः सह मार्गे गच्छन् आसीत्। तस्मिन् एव मार्गे सुब्बरामस्य आपणः आसीत्। तस्मात् आपणात् आगच्छतः खाद्यगन्धस्य कारणतः लक्ष्मीपतेः मुखे रसः उत्पन्नः। सः सुब्बरामस्य आपणं प्रविश्य पृष्टवान्– "किं भोः, भवतः मधुरखाद्यस्य गन्धेन एव आकृष्टः अहम् अत्र आगतः। गन्धः केवलम् उत्तमः, उत खाद्यम् अपि उत्तमम् अस्ति?" इति।

"भोः, भवान् एव खादित्वा खाद्यस्य रुचिं जानातु" इति उक्तवान् सुब्बरामः।

लक्ष्मीपतिः सन्तोषेण एकैकं खाद्यं खादन् स्नेहितेभ्यः अपि दत्तवान्। सुब्बरामाय धनं कियत् दातव्यं भवेत् इति लक्ष्मीपतेः चिन्ता एव नास्ति। धनं न दातव्यम् इति निश्चित्य एव तत्र गतवान् आसीत् लक्ष्मीपतिः।

खाद्यं सर्वं खादित्वा लक्ष्मीपतिः पृष्टवान्– "मया आहत्य कति रूप्यकाणि दातव्यानि इति सम्यक् गणयित्वा वदतु" इति।

तदा सुब्बरामः गणयित्वा उक्तवान्– "भवता पञ्चाशत् रूप्यकाणि दातव्यानि" इति।

एतत् श्रुत्वा लक्ष्मीपतिः विस्मरणस्य अभिनयं कुर्वन्– "हन्त! एकस्य युतकस्य कोषे धनं स्थापयित्वा अपरं युतकं धृत्वा आगतवान् अहम्। तथापि न काऽपि हानिः। पुनः यदा अहम् एतस्यां दिशि आगमिष्यामि तदा भवान् धनविषये स्मारयतु। अवश्यं दास्यामि" इति।

लक्ष्मीपतये दत्तम् ऋणं न प्रत्यागच्छति

इति सुब्बरामः सम्यक् जानाति। कण्टकं कण्टकेनैव अपनेतव्यम् इति चिन्तयन् सुब्बरामः– "भवतः अपेक्षया मम विस्मरणशीलता इतोऽपि अधिका एव। द्वयोः अपि विस्मरणं भवति इति कारणतः एकम् उपायं चिन्तयाम। भवतः नाम, भवता दातव्यं धनं च एतस्याः भित्तेः उपरि लिखित्वा स्थापयामि। अहं यदा यदा लिखितं द्रक्ष्यामि तदा भवता दातव्यं धनं स्मृतं भविष्यति। स्मारयितुम् अपि सौलभ्यं भविष्यति" इति वदन् बृहन्गात्रैः अक्षरैः भित्तेः उपरि लक्ष्मीपतेः नाम लेखितुम् उद्युक्तः अभवत्।

एतत् दृष्ट्वा भीतः लक्ष्मीपतिः उक्तवान्– "किमिदम्? एतावद्बृहत्गात्रैः अक्षरैः मम नाम, मया दातव्यं धनं च लिखन् अस्ति खलु? भवतः आपणं ये ये आगच्छन्ति ते सर्वे अपि भवता लिखितं पश्यन्ति। एतेन मम अपमाननम् भवति इति ज्ञातुं न शक्नोति वा भवान्?" इति।

तदा सुब्बरामः स्वस्य व्यवहारेण खिन्नः इव नटनां कुर्वन् उक्तवान्– "भोः, भवता उक्तं सत्यम्। तद्विषये अहं न चिन्तितवान् एव। भवतु, तर्हि अन्यम् उपायं चिन्तयाम। भवतः उत्तरीयं ददातु। तत् एतस्याः भित्तेः उपरि स्थापयामि। यदा अहम् उत्तरीयं द्रक्ष्यामि तदा मम स्मरणं भविष्यति। 'स्कन्धे उत्तरीयं नास्ति' इति यदा भवान् ज्ञास्यति तदा भवतः स्मरणं भविष्यति। एवं च आवाम् उभौ एव विषयं जानीवः। अन्यः कोऽपि एतं विषयं ज्ञातुं न शक्नोति" इति।

इदानीं किं करणीयम् इति न ज्ञातवान् लक्ष्मीपतिः। 'उत्तरीयं सुब्बरामाय दीयते चेत् अपि मम अपमाननम्। भित्तेः उपरि मम नाम लिखितं चेत् अपि अपमाननम् एव। तदा सर्वेऽपि ग्रामीणाः माम् उपहसेयुः। एवं स्वकीयं तन्त्रं सुब्बरामस्य समीपे साधयितुं न शक्तवान् अहम्' इति चिन्तयन् लक्ष्मीपतिः सुब्बरामाय पञ्चाशत् रूप्यकाणि दत्त्वा ततः निर्गतवान्।



# चन्दमामानुबन्धः—५५

## अस्मद्देशीया पशुपक्षिसम्पत्–

# सुरङ्गसदृशस्य नीडस्य रचयितारः




**प्रा**यः पक्षिणः वृक्षगुल्मादिषु नीडं रचयित्वा वसन्ति। किन्तु केचन भूमेः अन्तः नीडं रचयन्ति। तादृशेषु रामचरणो नाम पक्षी अपि अन्यतमः। प्रायः एषः पक्षी नदीतीरेषु मृदुमृत्तिकायां द्विपुरुषपरिमाणपरिमितं सुरङ्गं निर्माय तत्र वसति। एतादृशे सुरङ्गमये नीडे पञ्चषाणि अण्डानि प्रसूते। मार्च्-जून्मासयोः अभ्यन्तरे एतस्य सुरङ्गनिर्माणकार्यं प्रचलति।

प्रपञ्चे रामचरणपक्षिषु शताधिकभेदाः सन्ति। तेषु प्रमुखाः तु मैना-जातीयाः श्वेतवक्षसा युक्ताः पक्षिणः। एतेषां पक्षौ स्फुटनीलवर्णेन युक्तौ भवतः। पक्षयोः अधोभागः धूसरवर्णोपेतः भवति। चञ्चूः च रक्तवर्णेन युक्ता सती मीन-मण्डूकशिशुप्रभृतीन् ग्रहीतुं यथा शक्येत तथा तीक्ष्णा दृढा च भवति। याः वृक्षशाखाः नदीजलस्य उपरि प्रसृताः भवन्ति तासाम् उपरि एते पक्षिणः उपविशन्ति। जले यदा आहारः दृश्यते तदा झटिति उत्प्लुत्य आहारं गृहीत्वा शाखायाः उपरि शिलायाः उपरि वा पातयित्वा खादन्ति। खादनसमये शिरोभागः प्रथमं मुखे स्थाप्यते।

श्वेतवर्णीयाः श्यामवर्णीयाः च एतज्जातीयाः पक्षिणः आहारसङ्ग्रहणे सुनिपुणाः भवन्ति। जलस्य उपरि डयमानाः एते यदा मीनादिकं दृश्यते तदा हठात् आक्रमणं कृत्वा जलं प्रविश्य आहारं गृहीत्वा उड्डयनं करिष्यन्ति।

एतेषु हिमालयप्रदेशे दृश्यमानाः पक्षिणः आकारेण स्थूलाः। एते समुद्रतलात् ८०० मीटर्-उन्नते स्थले वासं करिष्यन्ति।



# आधुनिकं भारतीयसाहित्यम्

पुल्लय्यः कश्चन दृढकायः ग्रामीणः तरुणः। तस्य स्वभावः उत्तमः। दण्डचालने व्याघ्रनृत्ये च निपुणः सः सर्वेषां मनसः आकर्षणे समर्थः आसीत्। तस्य स्वप्नः आसीत् यत् मम विवाहानन्तरं जायमानः पुत्रः शौर्येण माम् एव अतिरिच्य तिष्ठन् चोराणां ग्रहणेन ख्यातिं प्राप्नुयात् इति।

पुल्लय्यः नीलीनामिकां तरुणीं परिणीतवान्। नीली अपि पतिः इव सत्यप्रिया एव। तौ यद्यपि दारिद्र्येण जीवतः, तथापि तौ प्रामाणिकतया व्यवहरतः, परिश्रमेण कार्यं कुरुतः च।

## कान्तारावुवर्यस्य कृतिः – 'आत्मवञ्चितः'



गच्छता कालेन ताभ्याम् एकः पुत्रः प्राप्तः। तस्य नाम 'मल्लः' इति निश्चितम्। कालः परिवृत्तः। देशस्य बहुषु भागेषु धान्यस्य उपचयः न्यूनः जातः। अतः सर्वकारेण आज्ञा कृता यत् ग्रामीणैः कृषिकैः सर्वकाराय अधिकं धान्यं दातव्यम् इति। एषा अपेक्षा न्यायोचिता न इति भावितवान् पुल्लय्यः। अतः यदा धान्यं नेतुम् अधिकारिणः आगताः तदा सः विरोधं प्रकटितवान्। आरक्षकाः आगताः। पुल्लय्यः तैः सह कलहं कृतवान्। आरक्षकाः तं बद्ध्वा कारागारे स्थापितवन्तः।

पत्युः बन्धविमोचनार्थं प्रयतमानायाः नीलायाः साहाय्यं कृतवान् तद्ग्रामीणः सुराजः नाम धनिकः। किन्तु पुल्लय्यः यदा कारागारात् आगतः तदा एषः धनिकः वञ्चनायुक्तां गणनां प्रदर्श्य 'एतावत् धनं भवता शीघ्रं दातव्यम्' इति पुनः पुनः वदन् पुल्लय्यस्य क्षेत्रं वशीकृतवान्। एवं पुल्लय्यः निराधारः जातः।

तद्ग्रामीणः कश्चन अन्धः भिक्षुकः पूर्वतनद्वेषस्य प्रतीकारार्थं कदाचित् तं धनिकं ताडितवान्। 'एतत् पुल्लय्येन एव कारितम्' इति धनिकः उक्तवान्। पुल्लय्यस्य बन्धनार्थम् आरक्षकाः आगताः। पुल्लय्यः एकमात्राश्रयं गृहं धनिकाय विक्रीय आरक्षकेभ्यः धनं दत्त्वा आत्मानं रक्षितवान्।

निराधारः निराश्रयः च पुल्लय्यः पत्न्या पुत्रेण सह नगरं गतवान्। एतावत्पर्यन्तं सः न्याय्येन नीतियुक्तेन च मार्गेण जीवितवान् आसीत्। किन्तु इदानीं तस्य जीवनं कष्टकरं दुर्भरं च जातम्। तथापि

पत्न्याः पुत्रस्य च सहवासेन सः सन्तोषेण एव तिष्ठति स्म।

नगरे उद्योगप्राप्त्यर्थं बहुधा प्रयत्नः कृतः पुल्लय्येन। किन्तु तेन किमपि प्रयोजनं न सिद्धम्। गृहे उपवासः आरब्धः। एतस्मिन् समये उभयोः चोरयोः परिचयः अभवत्। अनन्यगतिकतया पुल्लय्यः तयोः गणस्य सदस्यः जातः।



कदाचित् रात्रौ त्रयः अपि मिलित्वा कस्यचित् धनिकस्य गृहस्य चौर्यं कर्तुं गतवन्तः। यदा एतैः चौर्यार्थम् उद्युक्तं तदा धनिकः जागरितः। उभौ चोरौ जल-निर्गमनालस्य आधारेण उपरि गन्तुं प्रयतमानौ आस्ताम्। धनिकः तौ लक्ष्यीकृत्य गोलकास्त्रं प्रयोक्तुम् उद्युक्तः। तावता विना शब्दं गत्वा पुल्लय्यः तं धनिकं शिरसि ताडितवान्। अस्त्रं लक्ष्यच्युतं जातम्। ततः त्रयः अपि पलायितवन्तः।

पुल्लय्यस्य प्रीतिपात्रं पुत्रः मल्लः चौर्यार्थं गच्छतः पितुः अनुसरणं कृतवान् आसीत्। पल्लय्यः एतं विषयं न जानाति स्म। मल्लः धनिकगृहे प्रवृत्तं सर्वं दृष्टवान् आसीत्।

अनन्तरदिने प्रातः पिता यदा गृहं न प्रत्यागतः तदा मल्लः धनिकगृहं गत्वा 'अहं मम पितरं द्रष्टुम् इच्छामि' इति रोदनं कृतवान्। धनिकेन पृष्टः सः बालकः आत्मना गतरात्रौ दृष्टं सर्वं निवेदितवान्। पितुः, तस्य साहाय्यकयोः चापि नाम अपि निवेदितवान् सः। आरक्षकाः विनायासं चोरान् गृहीतवन्तः।

'मम पुत्रः चोराणां ग्रहणे समर्थः भवतु' इति पुल्लय्यस्य अपेक्षा आसीत् खलु? तदनुगुणम् एव इदानीं प्रवृत्तम् आसीत्। किन्तु पितुः बन्धनस्य कारणम् आसीत् पुत्रः! अहो विडम्बना!

बहूनि कष्टानि आपतितानि चेदपि पुल्लय्यस्य पत्नी नीली धैर्येण व्यवहरन्ती सन्मार्गेण एव जीवनं यापितवती।

बलिवाड् कान्ताराबुवर्यस्य 'डगापडिना तम्माडु' (स्वयं वञ्चितः नायकः) इत्येतस्य कथापुस्तकस्य कथा एषा। आन्ध्रप्रदेशस्य ग्रामीणजीवनस्य नगरजीवनस्य च समीचीनं चित्रणं दृश्यते एतस्मिन् पुस्तके। एतस्मिन् शतके एव प्राकाश्यं गतम् एतत् पुस्तकं बहुभिः भाषाभिः अनूदिता अस्ति अपि।

# भवन्तः जानन्ति वा?

१. उत्तरभारते द्वादशवर्षेषु एकवारं प्रवर्तमानस्य उत्सवस्य नाम किम्?
२. कस्यचित् जन्तोः शिरः हस्तौ च मानवस्य इव, शरीरम् अश्वस्य इव च भवन्ति। तादृशः विचित्रः जन्तुः कस्मिन् पुराणे उक्तः?
३. सुप्रसिद्धाः 'खुजुराहो'देवालयाः कुत्र सन्ति?
४. 'ड्यानूब्'नदी 'पूर्वयुरोप्' मध्ये विद्यमानतः कस्माच्चित् नगरात् प्रवहति। तत् नगरं किम्?
५. चोलानां राजधानी का?
६. एशियाखण्डस्य दक्षिणभागे एकः देशः विदेशस्य अधीने नास्ति। सः कः?
७. समुद्रभूमिम् आधारीकृत्य स्थितः पर्वतः कः? तस्य औन्नत्यं कियत्?
८. कस्य ग्रीक्देशस्य राजा अस्माकं देशं प्रति मेगस्तनीसं प्रेषितवान्? सः मेगास्तनीस् कस्य आस्थानम् अलङ्कृतवान् आसीत्?
९. 'राफ्लिसिया'नामकस्य पुष्पस्य वैशिष्ट्यं किम्?
१०. मक्षिका सामान्यतः कति दिनानि जीवति?
११. आफ्रिकादेशे विद्यमानं महत् सरोवरं किम्?
१२. मानवस्य कपाले कति अस्थीनि भवन्ति?
१३. पोर्चुगीस्नाविकाः यदा श्रीलङ्कां प्रविष्टवन्तः तदा श्रीलङ्कायाः किमिति नामकरणं कृतवन्तः?
१४. हिन्दुपुराणे उक्तं वृष्टिदेवस्य नाम किम्?
१५. कश्चन सर्वाधिकारी आरम्भे अध्यापकः पत्रिकाकारः आसीत्। सः कः?
१६. नोबलशान्तिपारितोषिकं प्रथमं कः प्राप्तवान्?
१७. सिखुजनानां पवित्रः ग्रन्थः कः?
१८. कस्माच्चित् वृक्षात् निष्कासितः रसः 'मलेरिया'रोगस्य औषधार्थम् उपयुज्यते। सः वृक्षः कः?

## उत्तराणि

१. कुम्भमेलः इति।
२. ग्रीक्पुराणे।
३. मध्यप्रदेशराज्ये।
४. बुडापेस्ट्। एकस्मिन् तीरे बुडा, अपरस्मिन् तीरे पेस्ट् नगरं च अस्ति।
५. तञ्जावूरु।
६. थायूल्याण्ड्।
७. 'हवाय्'मध्ये विद्यमानः मौनाक्लिपर्वतः। एतस्य औन्नत्यं ३२,००० द्वादशाङ्गुलम्। समुद्रतलात् १३६८४ द्वादशाङ्गुलोन्नते स्थले एषः अस्ति।
८. ग्रीक् राजः सेल्यूकस्। चन्द्रगुप्तमौर्यस्य आस्थानम्।
९. प्रपञ्चे विद्यमानेषु पुष्पेषु एव बृहदाकारकम्। इण्डोनेशिया मध्ये अस्ति।
१०. चत्वारि दिनानि यावत्।
११. उगाण्डायाः किन्यायाः टान्जानियायाः मध्ये स्थितं विक्टोरियासरोवरम्।
१२. २९ अस्थीनि।
१३. 'जीलान्' इति।
१४. वरुणदेवः इति।
१५. इटलीदेशीयः मुसोलिनी।
१६. रेड् क्रास् संस्थापकः 'जीन् हेन्रि ड्युराण्ट्'।
१७. गुरुग्रन्थसाहेब् (आदिग्रन्थः इति वा)।
१८. 'सिङ्कोना' वृक्षः।



# कृपणस्य नाणकम्

कस्मिंश्चित् नगरे पूर्वं वीरभद्रः नाम धनिकः निवसति स्म। सः नितरां कृपणः आसीत्। कदाचित् कुत्रापि गच्छन् मार्गे स्खलनात् सः अपतत्। तदा तस्य कोषात् नाणकानि अपतन्, इतस्ततः विकीर्णानि च। कोषे दश नाणकानि आसन्। अन्वेषणात् वीरभद्रः नव एव नाणकानि प्राप्तवान्।

'कुत्रापि पतितम् एकं नाणकं मया न प्राप्तं स्यात्, किन्तु अन्येन केनचित् अवश्यं प्राप्येत। अतः अहं दूरे तिष्ठन् नाणकं केन प्राप्यते इति परिशीलयिष्यामि' इति आलोच्य वीरभद्रः दूरे उपविष्टवान्। तेन मार्गेण बहवः गताः। किन्तु तत् नाणकं केनापि न प्राप्तम्।

निराशः वीरभद्रः गृहं प्रत्यागतवान्। प्रवृत्तं समग्रं पत्नीं निवेदितवान्। तदा पत्नी उक्तवती– "भवान् सायं ग्रामाधिकारिणः समीपं गत्वा सर्वं निवेदयतु। यदि कोऽपि तत् नाणकं प्राप्नुयात् तर्हि सः तत् ग्रामाधिकारिणे दद्यात् एव" इति।

वीरभद्रस्य पतनात् च्युतं तत् नाणकं गुल्ममध्ये पतितम् आसीत्। सर्पग्रहणार्थं तत्र गतेन नागराजेन तत् प्राप्तम्। नाणकप्राप्तेः समनन्तरम् एव ऐदम्प्राथम्येन तस्य मनसि विचारः उत्पन्नः यत् मद्यं पातव्यम् इति। अतः सः झटिति सुरापणं गतवान्।

"आगच्छतु नागराज! ऐदम्प्राथम्येन भवतः अत्र आगमनं जातम्। अद्य अत्र आगमनस्य किं कारणम्?" इति हसन् पृष्टवान् सुरापणस्वामी।

"मम मनसि एतादृशी इच्छा अद्य कथम् उत्पन्ना इति अहम् अपि न जानामि" इति उक्त्वा मार्गपार्श्वे प्राप्तं तत् नाणकं सुरापणस्वामिने दत्त्वा मद्यं पीत्वा ततः निर्गतवान् नागराजः।

अल्पे एव काले तेन मार्गेण गच्छन् भीमः नाम मल्लः सुरापणस्वामिना दृष्टः।



सुरापणस्वामी भीमं स्वसमीपम् आहूय उक्तवान्– "मानवस्य कश्चित् शत्रुः भवति एव। राममन्दिरस्य पार्श्वे निवसन् सोमनाथः पूर्वं कदाचित् अप्रियवचनेन मां कोपितवान् आसीत्। ताडनेन एतस्य प्रतीकारः साधनीयः इति अद्य इच्छा उत्पन्ना अस्ति। अतः यदि भवान् तं ताडयेत् तर्हि अहं भवते एकं रूप्यकं दास्यामि" इति।

वस्तुतः भीमः विना कारणं कमपि पीडयितुं न इच्छति स्म। अतः सः सुरापणस्वामिनः वचनं तिरस्करणीयम् इति यावत् चिन्तयन् आसीत् तावता सुरापणस्वामी नागराजतः प्राप्तं तत् नाणकं भीमस्य हस्ते स्थापितवान् आसीत्। नाणकस्पर्शात् एव भीमस्य चिन्तनरीतिः परिवृत्ता। सः मौनं ततः निर्गत्य सोमनाथं निर्दयं ताडितवान्। एतेन सोमनाथः रुदन् भीमम् उक्तवान्– "भोः, विना कारणं निरपराधं मां भवान् ताडितवान्। एतस्य फलं भवते भगवान् अवश्यं दास्यति" इति।

एतस्मात् भीमे महती पापभीतिः उत्पन्ना। अतः सः झटिति मन्दिरं गतवान्। अर्चकस्य हस्ते सुरापणस्वामिना दत्तं नाणकं निक्षिप्य उक्तवान् भीमः– "मम पापानि यथा नश्येयुः तथा पूजां करोतु कृपया" इति।

तस्य नाणकस्य प्राप्त्या अर्चके प्रबला इच्छा उत्पन्ना यत् पार्श्वमार्गे निवसन्त्याः वासन्त्याः गृहं गत्वा गानं श्रोतव्यम् इति। वासन्ती धनप्राप्तिं विना गीतं न श्रावयति स्म। अर्चकः त्वरया पूजां समाप्य मन्दिरस्य द्वारं पिधाय भीमात् प्राप्तं नाणकं स्वीकृत्य वासन्त्या गृहं गत्वा वासन्त्यै तत् नाणकं दत्त्वा स्वकीयाम् इच्छां प्रकटितवान्।

वासन्ती अर्चकतः नाणकं प्राप्य गानेन तं सन्तोष्य प्रेषितवती। गानस्य अनन्तरं सा नाणकं पेटिकायां स्थापनीयम् इति उद्देशेन उत्थितवती। किन्तु नाणकं तया कुत्रापि न प्राप्तम्। सा बहुधा अन्वेषणं कृतवती। तथापि तत् न प्राप्तम्। अन्ते सा निर्णीतवती यत् तत् नाणकं दास्या गौर्या एव चोरितम् इति। अतः सा प्रवृत्तं समग्रं मातरं निवेदितवती।

तदा माता उक्तवती– "इदानीम् एव

गत्वा भवती न्यायाधीशं प्रवृत्तं वदतु। अन्यथा सा गौरी अग्रे कदाचित् आभरणानि अपि चोरयेत्" इति।

"गौर्या कृतं चौर्यं निवेद्य गौरी सम्यक् दण्डनीया इति मद्वचनैः भवान् न्यायाधीशं निवेदयतु" इति उक्त्वा एकं सेवकं न्यायाधिकारिसमीपं प्रेषितवती वासन्ती। वस्तुतः तु गौरी एव तत् नाणकं चोरितवती आसीत्। इतः पूर्वं तया कदापि चौर्यं न कृतम् आसीत्। तेन नाणकेन चोलः क्रेतव्यः इति निश्चित्य गौरी वस्त्रापणं गतवती। इतः पूर्वं गौरी तम् अपणं बहुवारं वासन्त्या सह गतवती आसीत्, किन्तु एकाकितया तु कापि न गतवती आसीत्। अतः आपणिकः व्रजेन्द्रः गौर्यां सन्देहं प्राप्य वासन्त्याः गृहं प्रति वार्तां प्रेषितवान्। गौर्याः चौर्यं प्रमाणितं जातम्।

सायं न्यायाधीशः वासन्तीम् आनाय्य उक्तवान्– "गौरी रूप्यकमात्रं चोरितवती, तदपि ऐदम्प्राथम्येन। अतः एतदर्थं तस्याः कारागृहं प्रति प्रेषणं न उचितम्। ताम् उद्योगात् च्युतां करोतु। तावता अलम्" इति।

"तया यत् नाणकं चोरितं तत् तु अतिविशिष्टम् अस्ति। मन्दिरस्य अर्चकः ऐदम्प्राथम्येन मम गृहम् आगत्य मम गानं श्रुत्वा तत् नाणकं दत्त्वा गतवान्" इति उक्तवती वासन्ती।

"वृद्धे अर्चके एतादृशं परिवर्तनम्! आश्चर्यकरम् एतत्" इति आश्चर्यं प्रकटितवान् न्यायाधीशः।

अनन्तरं सः किञ्चित्कालं विचिन्त्य



अर्चकं स्वसमीपम् आनायितवान्। अर्चकस्य मुखात् ज्ञातं यत् तत् नाणकं मल्लात् भीमात् प्राप्तम् इति। अर्चकेन एतत् अपि उक्तं– "तस्मिन् नाणके कीदृशं वैशिष्ट्यम् अस्ति इति न जानामि। तस्य प्राप्तेःसमनन्तरम् एव मयि विचित्रा इच्छा उत्पन्ना" इति।

एवम् एकैकं पृच्छन् अपरस्य नाम जानन् नागराजम् अपि आनाय्य प्रवृत्तं समग्रं ज्ञातवान् न्यायाधीशः। 'नागराजेन प्राप्तम् एतत् नाणकं कस्य स्यात्' इति चिन्तयन् स्थितवान् सः। तावता कश्चन कृषिकः, वीरभद्रः च तत्र आगतौ। सः निर्धनः कृषिकः रुदन् उक्तवान् यत् मम एकं रूप्यकं कुत्रापि नष्टम् इति। वीरभद्रः अपि उक्तवान् यत् ममापि रूप्यकं नष्टम् अस्ति इति।

न्यायाधीशः तं निर्धनं कृषिकम् उक्तवान् यत् भवदीयं धनं न प्राप्तम् इति। अनन्तरं सः वीरभद्रं पश्यन् उक्तवान्– "भवतः धनं यत् नष्टम् आसीत् तत् तु प्राप्तम् अस्ति" इति। ततः तत् नाणकं वीरभद्राय दत्तवान् सः।

तदा निर्धनः कृषिकः आश्चर्येण पृष्टवान्– "एतत् नाणकं वीरभद्रस्य एव इति कथं निर्णीतं भवता?" इति।

तदा न्यायाधीशः हसन् उक्तवान्– "मित्र! एतत् नाणकं वीरभद्रस्य एव। वीरभद्रः धनं सर्वदा पेटिकायां स्थापयति। एतस्मात् बन्धनात् विमोचनं प्राप्तुम् इच्छति स्म एतत् नाणकम्। अतः एतत् कस्यापि हस्ते स्थिरतया न स्थितम्। तावदेव न, यः एतत् प्राप्तवान् तस्मिन् दुर्भावनाम् अपि अजनयत्। अतः एतत् नाणकं वीरभद्रस्य एव इति निर्णीतं मया" इति।

न्यायाधीशस्य वचनं श्रुत्वा तत्र उपस्थिताः सर्वे हसितवन्तः। न्यायाधीशस्य वचनात्, जनानाम् उपहासात् च वीरभद्रे लज्जा चिन्तनं च उत्पन्ने। क्षणकालस्य अनन्तरं सः तत् नाणकं निर्धनाय कृषिकाय दत्त्वा मौनं ततः निर्गतवान्। ततः आरभ्य सः स्वकीयं धनं निर्धनानां हितार्थं व्ययीकर्तुम् उद्युक्तः अभवत्।





# समर्थःचिकित्सकः

जगन्नाथपुरनामके ग्रामे शङ्करः नाम कश्चन पुरोहितः निवसति स्म। तस्य एका पुत्री आसीत्। पुत्रः कोऽपि न आसीत्। अतः शङ्करः श्रीरामनामकं अनाथबालकं स्वगृहम् आनीय पोषितवान् आसीत्। प्रतिदिनं श्रीरामम् आत्मना सह नयन् तं पौरोहित्यं पाठयति स्म शङ्करः।

कदाचित् प्राचीनानि पञ्चाङ्गपुस्तकानि अपेक्षमाणः शङ्करः गृहस्य अट्टम् आरुह्य प्राचीनपुस्तकसमूहम् अधः आनीतवान्।

एकैकस्यापि पुस्तकस्य धूलिम् अपनीय पुस्तके कः विषयः अस्ति इति परिशीलयन् पञ्चाङ्गस्यापि अन्वेषणं कुर्वन् आसीत् शङ्करः। अत्रान्तरे तेन कश्चन वैद्यकीयग्रन्थः प्राप्तः। तस्मिन् प्राचीने वैद्यग्रन्थे विविधानां मूलानाम् उपयोगः, विविधानां रोगाणां चिकित्सा च निरूपिता आसीत्। शङ्करः पत्नीम् आहूय तं ग्रन्थं प्रदर्शितवान्। तदा सा उक्तवती— "अहो दया परमेश्वरस्य! तस्य कृपातः एव अस्माभिः एषः ग्रन्थः प्राप्तः। ये रोगकारणतः शय्याम् आश्रिताः भवन्ति तादृशानां चिकित्सां करोतु भवान्। यदि ते स्वस्थाः भवेयुः तर्हि भवता धनं कीर्तिः च प्राप्यते। यदि चिकित्सावैफल्यतः रोगी मृतः भवेत् तर्हि दानरूपेण गौः तु प्राप्यते एव, यतः भवान् पुरोहितः अस्ति। एवं चिकित्सावृत्तिः भवता आश्रिता चेत् साफल्येन वैफल्येन चापि भवतः लाभः एव भविष्यति" इति।

पत्न्याः वचनं शङ्कराय अरोचत। किन्तु हठात् चिकित्सावृत्तिः आश्रिता चेत् जनाः मयि अविश्वासं कुर्युः इति आलोच्य शङ्करः श्रीरामद्वारा चिकित्सां कारयितुम् उद्युक्तः अभवत्।

"भामहः"



शङ्करस्य मार्गदर्शनस्य अनुगुणं रोगिणां चिकित्सां करोति स्म श्रीरामः। अल्पे एव काले वैद्यत्वेन ख्यातः अभवत् सः। किन्तु सामान्यानां रोगाणां निमित्तं केवलम् औषधं श्रीरामद्वारा दापयति स्म शङ्करः। यदि किमपि विशेषरोगलक्षणं दृश्यते तर्हि तादृशस्य चिकित्सार्थं न प्रयतते स्म सः। तादृशान् रोगिणः, ग्रामे एव स्थितस्य अन्यस्य वैद्यस्य समीपं प्रेषयति स्म।

कदाचित् शङ्करः श्रीरामः च पार्श्वग्रामे प्रवृत्तम् एकं विवाहं निर्वर्त्य प्रत्यागच्छन्तौ आस्ताम्।

मध्येमार्गं ग्रामाधिकारिणः सेवकः ताभ्यां मिलितः। सः आतङ्कमिश्रितेन स्वरेण शङ्करम् उक्तवान्– "पण्डितवर्य! अस्माकं स्वामिनः ध्वनिशक्तिः नष्टा अस्ति। ग्रामवैद्यः श्रीनिवासाचार्यः ग्रामे नास्ति। स्वामिनं दृष्ट्वा पार्श्वगृहवासिनः जनाः वदन्तः सन्ति यत् एषः किञ्चित्कालमात्रं जीवेत् इति। अस्माकं स्वामिनी चिन्तयति यत् भवता चिकित्सा कृता चेत् किमपि प्रयोजनं सिद्ध्येत् इति। गृहे सर्वे भवन्तं प्रतीक्षमाणाः सन्ति" इति।

"अस्वास्थ्यस्य कारणं किमपि ज्ञातं वा? अपथ्यं किमपि सेवितं वा?" इति पृष्टवान् शङ्करः।

"मध्याह्ने भोजनस्य अनन्तरं अस्माकं स्वामी क्षेत्रं गतवान्। तत्र कर्मकरः पक्वम् आम्रफलं तस्मै दत्तवान्। तत् फलं खादितवान् अस्माकं स्वामी। ततः पिपासानिवारणार्थं नारिकेलजलं पीतम्। ततः निम्बवृक्षे मधुमक्षिकाभिः सञ्चितं मधु आनीय दत्तं कर्मकरेण। तत् अपि आस्वादितं स्वामिना। ततः दैनन्दिनाभ्यासस्य अनुगुणं ताम्बूलचर्वणं कृतम्। अनन्तरम् अल्पे एव काले तदीया ध्वनिशक्तिः लुप्ता। नेत्रे चञ्चले जाते। वेदनाम् अनुभवन् सः अधः पतितवान्। विपत्स्थितौ स्थितं तम् अन्ये कर्मकराः जनानां साहाय्येन गृहं प्रापितवन्तः" इति प्रवृत्तं निवेदितवान् सः कर्मकरः।

सर्वं श्रुत्वा शङ्करः गृहं गत्वा तं पुरातनवैद्यग्रन्थं परिशीलितवान्। तस्मात्

सः ज्ञातवान् यत् आम्रस्य नारिकेलस्य मधुनः च सेवनस्य अनन्तरं घण्टाभ्यन्तरे एव ताम्बूलं सेवितं चेत् तत् विषायते इति। एतस्य निमित्तं कीदृशी चिकित्सा इति तत्र सूचितम् आसीत्। शङ्करः शिरीषपुष्पस्य उपयोगेन पञ्चचूर्णं निर्माय श्रीरामेण सह ग्रामाधिकारिणः गृहं गतवान्।

गमनसमये मार्गे सः श्रीरामम् उक्तवान्– "दैवानुग्रहः अस्ति चेत् लाभपरम्परा एव प्राप्यते। भवान् एतत् औषधं ग्रामाधिकारिणे ददातु। तेन भवान् कीर्तिं प्राप्स्यति" इति।

शङ्करः श्रीरामः च ग्रामाधिकारिणः गृहं गतवन्तौ। ग्रामाधिकारी कष्टम् अनुभवन् मञ्चस्य उपरि शय्यायां शयितः आसीत्। श्रीरामः औषधेन सह मञ्चस्य समीपं गतवान्।

तदा तत्र उपस्थितेषु कश्चन वृद्धः उक्तवान्– "समर्थः वैद्यः श्रीनिवासाचार्यः ग्रामे नास्ति इत्यतः एतस्मात् बालवैद्यात् चिकित्सा कारणीया आपतिता। चिकित्सायाः साफल्ये वैफल्ये चापि एतस्य लाभः एव। साफल्ये शुल्कं प्राप्यते, वैफल्ये च गौः दानरूपेण प्राप्यते। यदि एतस्य रोगिणः जीवेयुः तर्हि तत् दैवानुग्रहेण एव, न तु चिकित्सापरिणामतः" इति।

एतत् वचनं श्रीरामेण अपि श्रुतम्। सः कोपेन तं वृद्धं पश्यन् ग्रामप्रमुखस्य मुखम् उद्घाट्य औषधं पाययित्वा जलम् अपि पायितवान्। अल्पे एव काले ग्रामप्रमुखस्य वेदना न्यूना जाता। किञ्चित्कालस्य



अनन्तरं सः शय्यातः उत्थाय उपविष्टवान्, चलितुं समर्थः अभवत् अपि।

एतया घटनया श्रीरामस्य ख्यातिः प्रवृद्धा। तं समर्थं वैद्यं भावयन्तः जनाः तस्य प्रशंसां कृतवन्तः। ग्रामप्रमुखः श्रीरामाय शङ्कराय च प्रभूतं धनं दत्त्वा आदरेण सत्कृतवान्।

ग्रामप्रमुखस्य अनारोग्यस्य वार्ता, श्रीरामेण कृतायाः चिकित्सायाः वार्ता च वृद्धवैद्येन श्रीनिवासाचार्येण श्रुता। 'अनुभवशून्यः एषः तरुणः एतादृशीम् उत्तमां चिकित्सां कथं कर्तुं शक्तवान्? प्रायः तस्य गृहे कोऽपि अमूल्यः चिकित्साग्रन्थः स्यात्। तदाधारेण सः चिकित्सां कृतवान् स्यात्' इति आलोचितवान् सः।

ततः अनन्तरदिने सः श्रीरामं स्वगृहम् आनाय्य तस्य मुखात् वस्तुस्थितिं ज्ञातवान्। श्रीरामस्य चिकित्साक्रमं ज्ञात्वा सः खिन्नः अपि।

सः श्रीरामं बोधितवान्– "वत्स! वैद्यविद्या गुरुमुखात् एव प्राप्तव्या। व्यवस्थिताध्ययनेन एव भवान् समर्थः वैद्यः भवितुम् अर्हति। भवता प्राप्तः ग्रन्थः समर्थेन वैद्येन लिखितः इत्यत्र नास्ति सन्देहः। किन्तु अनुभवस्य अभावतः, भवतः सर्वाः चिकित्साः सफलाः एव भवन्ति इति न। किम् एतादृशेन कार्येण? अहं शास्त्रीयां वैद्यविद्यां पाठयामि। सर्वम् अधीत्य भवान् ग्रन्थोक्तक्रमेण चिकित्सां करोतु। अपक्वं ज्ञानम् अपायकारकम् इति स्मरतु" इति।

श्रीनिवासाचार्येण उक्तः विषयः योग्यः एव इति अवगतवान् श्रीरामः। अतः सः श्रीनिवासाचार्यतः व्यवस्थितक्रमेण वैद्यविद्यां ज्ञातवान्। एवं सः वैद्यविद्यायां परिणतः जातः।

श्रीरामविषये अभिमानं वहन् शङ्करः तस्मै स्वपुत्रीं दत्त्वा तं जामातरं कृतवान्। श्रीनिवासाचार्यतः यत् अधीतं तस्य, गृहे लब्धस्य प्राचीनग्रन्थस्य च साहाय्येन चिकित्सां कुर्वन् श्रीरामः समर्थवैद्यत्वेन ख्यातिं प्राप्तवान्।






राम-रावणयोः युद्धं द्रष्टुम् आगताः देवादयः 'लोककण्टकम् अपगतम्' इति वदन्तः सन्तोषेण स्वस्थानं गतवन्तः।

रामः इन्द्रसारथिं मातलिम् आदरेण सत्कृत्य, इन्द्रं प्रति कृतज्ञतावचनानि सन्दिश्य, तम् इन्द्रलोकं प्रति प्रेषितवान्।

अनन्तरं सः लक्ष्मणं सुग्रीवं च आहूय पार्श्वे उपवेशितवान्, लक्ष्मणम् उद्दिश्य उक्तवान् च– "लक्ष्मण! विभीषणः लङ्कासिंहासने उपवेशनीयः। शास्त्रोक्तक्रमेण एतस्य निर्वर्तनार्थं यथायोग्यं व्यवस्थां करोतु" इति।

लक्ष्मणः वानराणां द्वारा सुवर्णकलशैः समुद्रजलानि आनायितवान्। विविधतीर्थ-क्षेत्रस्य तीर्थोदकानि अपि आनायितवान्। एवं सर्वसन्नाहः यदा जातः तदा विभीषणं स्वयं नीत्वा सिंहासने उपवेश्य समुद्रजलैः तीर्थजलैः च तस्य अभिषेकं कृतवान्।

'लङ्कानगरे सुखं शान्तिः च यथा स्थिततरया तिष्ठेत् तथा शासनं करिष्यामि' इति प्रतिज्ञां कृतवान् विभीषणः। पौराः राक्षसाः बहवः विभीषणाय विविधानि उपायनानि अर्पितवन्तः।

विभीषणः रामलक्ष्मणयोः सहकारं कृतज्ञतापूर्वकं स्मरन् कृतज्ञतासूचकानि विविधानि वस्तूनि तयोः कृते दत्तवान्।

तादृशानां वस्तूनां स्वीकारे सर्वथा इच्छा नास्ति रामस्य। तथापि 'विभीषणः न खेदनीयः' इति उद्देशेन मन्दहासपूर्वकं तानि सर्वाणि स्वीकृतवान् सः।

एवम् उपायनदान-स्वीकारकार्यक्रमः



समाप्तः। अनन्तरं रामः पार्श्वे स्थितं गम्भीरवदनं हनूमन्तम् अग्रे आहूय उक्तवान्– "आञ्जनेय, राक्षसराजस्य एतस्य विभीषणस्य अनुमतिं प्राप्य भवान् तत् उद्यानं प्रविश्य सीतां दृष्ट्वा पादौ अभिवन्द्य विजयवार्तां निवेद्य रावणस्य संहारम् अपि निवेद्य अहं लक्ष्मण-सुग्रीवादिभिः सकुशलम् अस्मि इति तां निवेदयतु। एवं शुभवार्तां तां निवेद्य तस्याः वार्ता का इति पृष्ट्वा आगत्य मां निवेदयतु" इति।

रामस्य आज्ञायाः अनुगुणं विभीषणस्य अनुमतिं प्राप्य हनूमान् ततः निर्गतवान्। रावणप्रासादस्य पार्श्वे स्थितस्य उद्यानस्य अन्तः गतवान् सः। तस्मिन् उद्याने वृक्षस्य अधः राक्षसीभिः परिवृता म्लानवदना सीता मौनम् उपविष्टवती आसीत्।

हनूमान् सीतायाः समीपं गत्वा भक्त्या नमस्कृत्य स्वस्य नामादिकं निवेद्य विनयेन पार्श्वे स्थितवान्। सीता दर्शनमात्रेण यद्यपि हनूमन्तं न अभिज्ञातवती, तथापि हनूमता यदा नामादिकम् उक्तं तदा सर्वं स्मृतवती। पूर्वतनघटनां स्मरन्ती सा आनन्दाश्रूणि स्रावितवती। मन्दहासपूर्वकं हनूमन्तं दृष्टवती च।

तस्याः मुखे जातं परिवर्तनं दृष्ट्वा सन्तुष्टः हनूमान् रामस्य सन्देशं निवेदितवान्– "आर्ये, सीतादेवि! रामः कुशली अस्ति। विभीषणेन सुग्रीवेण च सह संल्लापं कुर्वन् सः वानराणां मध्ये अस्ति। 'शत्रुवधं निवेद्य कुशलवार्तां चापि निवेद्य आगच्छतु' इति उक्त्वा मां सः प्रेषितवान्। रावणसंहारकार्ये आर्यः विभीषणः, बहवः वानरवीराः च विशेषसाहाय्यं कृतवन्तः। लक्ष्मणार्यस्य शौर्यम् अपि युद्धे अपूर्वम् आसीत्। एवं सर्वेषां सहकारेण रावणसंहारः जातः। रामः भवत्याः कुशलवार्तायाः ज्ञाने कुतूहली अस्ति। सः एवं सन्देशं प्रेषितवान् अस्ति – 'भद्रे! शत्रुसंहारः जातः इत्येतां शुभवार्तां निवेद्य भवत्याः सन्तोषं वर्धयन् अस्मि। पातिव्रत्यधर्मं जानती भवती सौभाग्यवशात् कुशलिनी अस्ति। अहं मम पराक्रमस्य बलात् विजयं सम्पादितवान् अस्मि। अतः भवती निश्चिन्ता भवतु। दुःखं

परित्यजतु। रावणः मृतः। लङ्कानगरी अस्मद्वशा जाता अस्ति। 'रावणवधं करिष्यामि एव' इत्येषा प्रतिज्ञा मया परिपालिता। विभीषणस्य पट्टाभिषेकः अपि मया प्रतिज्ञातः आसीत्। तदपि सिद्धम् अस्ति इदानीम्। अचिरात् एव विभीषणः भवत्याः समीपम् आगमिष्यति' इति। रामदूतः अहं प्रभोः सन्देशं यथास्थितं निवेदितवान् अस्मि'' इति।



एतानि वचनानि श्रुत्वा सीतादेवी आनन्दाश्रूणि स्रावयन्ती उत्थितवती। किन्तु तस्याः मुखतः एकम् अपि वचनं न निर्गतम्। तस्याः मुखस्य दर्शनात् एव ज्ञायते स्म यत् कञ्चन विषयम् अधिकृत्य सा गाम्भीर्येण चिन्तयन्ती अस्ति इति।

अतः पुनरपि उक्तवान् हनूमान्— ''भद्रे! किं चिन्तयन्ती अस्ति भवती? प्रतिवचनं किमर्थं न दत्तं भवत्याः? सन्तोषवार्तां प्राप्य अपि एतादृशं मौनं किमर्थम्?'' इति।

तदा सीता कम्पमानस्वरेण हनूमन्तम् उक्तवती— ''आर्यपुत्रेण यः विजयः प्राप्तः तं श्रुतवत्याः आनन्दनिर्भरायाः मम मुखात् किमपि वचनं न निर्गतम्। अतिप्रियां वार्तां निवेदितवन्तं भवन्तं केन रूपेण अभिनन्देयम् इत्यपि अहं न जानामि। भवतः कृत्यस्य अनुगुणं दातुं योग्यम् उपायनवस्तु मम समीपे किमपि नास्ति अपि'' इति।

तदा हनूमान् सीतां नमस्कृत्य उक्तवान्— ''अम्ब! परमानन्दकराणि वचनानि उक्तानि भवत्या। भवत्याः यत् मृदुवचनम् अस्ति तदेव अपूर्वम् उपायनम्। एतां वार्तां निवेदयितुं भवत्या सह वार्तालापं कर्तुं च अवकाशः प्राप्तः यत् तेन अहं नितरां सन्तुष्टः अस्मि। एतेन अहम् आत्मानं धन्यं मन्ये। इतः परं रामं भवतीं च सहैव यदि अहं पश्येयं तर्हि स्वर्गाधिपत्यम् अपि तृणाय भावयेयम्। सहस्थितयोः भवतोः अनुग्रहः प्राप्तव्यः इति मम महती इच्छा'' इति।

अनन्तरं सीता हनूमतः शौर्यं विनयव्यवहारं च बहुधा प्रशंसितवती। एतदनन्तरं हनूमान् सीताम् उक्तवान्— ''एताः क्रूराः राक्षस्यः भवतीम् एतावत्पर्यन्तं



पीडितवत्यः खलु? अतः यदि भवत्याः अनुज्ञा स्यात् तर्हि एताः निर्दयं मारयेयम्। प्रतीकारसाधनार्थम् अनुज्ञां ददातु कृपया'' इति।

हनूमतः अन्तरङ्गं जानती सीता सान्त्वनस्वरेण उक्तवती– ''आञ्जनेय! एताः सर्वाः रावणस्य दास्यः। रावणस्य आज्ञा यथा अस्ति तथा व्यवहृतम् एताभिः। याः पराधीनाः भवन्ति ताभिः प्रभोः आज्ञा पालनीया एव खलु भवति? यदि आज्ञा न पाल्येत तर्हि कठोरं दण्डनं प्राप्तव्यं खलु भवेत्? अतः एताभिः कर्तव्यं पालितम्। अतः प्रतीकारबुद्ध्या एतासां पीडनम् अनुचितम् एव भवेत्। एतादृशानि कष्टानि अनुभोक्तव्यानि इति मम ललाटे लिखितम् आसीत्। अतः एतत्सर्वं जातम्। एताः तु निरपराधाः। एतासां विषये मम किञ्चिदपि कोपः नास्ति। यदि राक्षस्यः बुद्ध्या एव मां पीडितवत्यः स्युः तर्हि अपि अहं तु एतासां प्रतिपीडनं न सहे'' इति।

सीतायाः वचनं श्रुत्वा सन्तोषम् अनुभवन् हनूमान्– ''आर्ये, रामानुगुणा पत्नी भवती। भवती भूदेवीपुत्री इत्यतः भूदेव्याः सहनागुणः भवत्याम् अपि सङ्क्रान्तः अस्ति। रामं प्रति भवत्याः सन्देशः कः इति वदतु तावत्। तं सन्देशं वहन् इतः अहं निर्गमिष्यामि'' इति उक्तवान्।

''आर्यपुत्रः रामः यावच्छीघ्रं द्रष्टव्यः इति मम तीव्रा इच्छा'' इति उक्तवती सीता।

एतं सन्देशं वहन् हनूमान् वेगेन रामसमीपं गतवान्। रामं दृष्ट्वा उक्तवान् सः– ''आर्य, यस्याः निमित्तं भवान् सेतुनिर्माणपूर्वकं समुद्रं लङ्घयित्वा लङ्कां प्राप्य रावणं संहृतवान् तां सीताम् अहं दृष्ट्वा आगतवान्। विजयवार्तां श्रुत्वा सा महान्तं सन्तोषं प्रकटितवती। रावणं संहृतवतः रामस्य, वीराधिवीरस्य लक्ष्मणस्य च दर्शनम् अचिरात् एव करणीयम् इति मम इच्छा इति उक्तवती अस्ति सा'' इति।

एतत् श्रुतवतः रामस्य नेत्राभ्याम् अश्रूणि आगतानि। 'एतावत्पर्यन्तं रावणसमीपे स्थितायाः सीतायाः स्वीकारः कृतः चेत् लोकः

मम उपहासं कुर्यात्। यदि अहं निरपराधिनीं सीतां परित्यजेयं तर्हि मया महत् पापम् आचरितं भवेत्। किं करणीयम् इदानीम्?' इति चिन्तयन् किञ्चित्कालं मौनं स्थितवान् रामः।

सः दीर्घं निःश्वसन् समीपस्थं विभीषणम् उक्तवान्– "भवान् दासीनां द्वारा सीतायाः अभ्यञ्जनस्नानं कारयित्वा, तां चन्दनादिभिः विलिप्ताम्, आभरणादिभिः विभूषितां च कृत्वा अत्र आनयतु" इति।

विभीषणः तत्क्षणे एव अन्तःपुरस्थाः दासीः आहूय आदिष्टवान्– "अभ्यञ्जन-स्नानानन्तरं सीतां चन्दनादिभिः आभरणादिभिः च अलङ्कृत्य, 'श्रीरामः द्रष्टुम् इच्छति' इति सन्देशं निवेद्य अत्र आनयन्तु" इति।

दासीनां द्वारा रामस्य अपेक्षां श्रुत्वा सीता उक्तवती– "अहं इदानीं यथा अस्मि तथैव रामसमीपं गच्छामि" इति।

"एतत् तु न सम्भवेत्। रामस्य आज्ञा यथा अस्ति तथा करणीयम्" इति तां निवेदितवान् विभीषणः।

सीता विभीषणस्य वचनम् अङ्गीकृतवती। अनन्तरं दास्यः सीतायाः तैलाभ्यञ्जनस्नानं कारितवत्यः। सुगन्ध-द्रव्याणां लेपनं कृतवत्यः। दिव्यं पीताम्बरं धारितवत्यः। विविधैः आभरणैः ताम् अलङ्कृतवत्यः। अनन्तरं तां शिबिकायाम्



उपवेश्य रामसमीपम् आनीतवत्यः। बहवः राक्षसाः शिबिकाम् अनुसृत्य आगतवन्तः।

विभीषणः रामसमीपम् आगत्य विनयेन उक्तवान्– "भवतः आज्ञायाः अनुगुणं सीता आनीता अस्ति मया" इति।

रामः तु चिन्ताक्रान्तः सन् मौनम् उपविष्टः अस्ति। विविधाः विरुद्धाः भावाः तं बाधन्ते स्म। दीर्घकालानन्तरं सीता दृश्यते इति एकत्र सन्तोषः। यदि सीतास्वीकारः अङ्गीक्रियेत तर्हि जनापवादः श्रोतव्यः भवेत् इति आतङ्कः। जनापवादश्रवणभीत्या सीता परित्यक्तव्या अपि भवेत् इति दुःखम् अपि। एवं विविधैः भावैः पीडितः अस्ति रामः।

क्षणकालस्य अनन्तरं श्रीरामः मौनमुद्रां



परित्यज्य विभीषणम् उक्तवान्— ''सीताम् अत्र आनयतु'' इति। तदा विभीषणः तत्रत्यान् वानरान् भल्लूकान् च आदिष्टवान्— 'इतः भवन्तः अपसरन्तु' इति। एतत् दृष्ट्वा रामः विभीषणम् उक्तवान्— ''एते न परकीयाः, अपि तु अस्मदीयाः एव। अतः एतेषाम् इतः प्रेषणं मास्तु। अस्मदीयाः यदि सीतां पश्यन्ति तर्हि न तत्र दोषः'' इति।

विभीषणः क्षमां सम्प्रार्थ्य ततः निर्गत्य सीतां तत्र आनीतवान्।

रामस्य वाग्व्यवहारं दृष्ट्वा लक्ष्मणः सुग्रीवः च ज्ञातवन्तौ यत् रामः सीताविषये निर्दयं व्यवहारं कुर्वन् अस्ति इति। रामस्य एषः व्यवहारः घोरं परिणामं जनयेत् इति चिन्तयतोः तयोः अन्तरङ्गे भीतिः उत्पन्ना।

विभीषणम् अनुसृत्य आगता सीता बहूनाम् उपस्थित्या लज्जाम् अनुभवन्ती शरीरं ह्रस्वीकृत्य शिरः अवनमय्य म्लानवदना रामस्य पुरतः स्थितवती। परितः बहवः सन्ति इत्यतः भावं प्रकटयितुं न शक्नोति सा। किन्तु भावान् निग्रहीतुम् अपि तस्याः सामर्थ्यं नास्ति। अतः आञ्चलेन मुखम् आवृत्य अश्रूणि स्रावयन्ती सा चीत्कारमिश्रितेन स्वरेण उक्तवती— ''आर्यपुत्र!'' इति। चिरकालानन्तरं पतिं पश्यन्त्याः तस्याः अन्तरङ्गे सन्तोषतरङ्गाः अपि आसन्।

रामः सीतां दृष्ट्वा सन्तोषादिकं भावं कमपि अप्रकटयन् गाम्भीर्येण उक्तवान्— ''सीते! युद्धे शत्रुं संहृत्य जयं प्राप्य भवतीं बन्धविमुक्तां कुर्वन् अहं मम शक्तिं निरूपितवान्। मम यत् अवमाननं जातं तस्य प्रतीकारं साधितवान्। मम प्रयत्नः सफलः जातः। रावणेन भवती अपहृता यत् तेन मम अपमाननं जातम् आसीत्। तदर्थम् अहं शत्रुं संहृतवान्। अपमानकलङ्कतः मुक्तः जातः च। मया या प्रतिज्ञा कृता आसीत् सा पालिता। हनूमता समुद्रलङ्घनं कृतं यत्, लङ्काप्रवेशः कृतः यत् तत् सफलं जातम्। सुग्रीवेण मम साहाय्यं कृतं यत् तत् अपि सफलं जातम्। मयि विश्वस्य विभीषणः मम पक्षम् आश्रितवान् यत् तदपि सफलं जातम्'' इति।

एतावता अपि रामस्य मुखात् सीताविषये प्रीतिद्योतकम्, अनुरागद्योतकं वा एकं वचनम् अपि न निर्गतम् आसीत्। अतः सीतायाः दुःखं प्रवृद्धम्। सा दुःखं निरोद्धुम् अशक्नुवती अश्रूणि स्रावितवती।

सीतायाः अश्रूणि दृष्टवतः रामस्य कोपः द्विगुणितः जातः। सः क्रोधेन सीतां पश्यन् उक्तवान्– "सीते! अवमानितेन यद्यत् करणीयं तत्सर्वं कृतं मया। किन्तु एतत्सर्वं भवत्याः निमित्तं न कृतं मया। राक्षसकुले वासं कृतवत्याः भवत्याः सदाचारनिष्ठता नष्टा। अतः अहं भवतीं परिग्रहीतुं न शक्नोमि। पराक्रमी स्वाभिमानी च पुरुषः परपुरुषाश्रये दीर्घकालं वासं कृतवतीं महिलां कथं वा परिग्रहीतुं शक्नुयात्? अतः भवत्यै अनुज्ञा दीयते मया। यत्र इष्यते तत्र गन्तुम् अर्हति भवती। रावणस्य अधीना आसीत् भवती। स्वसौन्दर्येण भवती रावणम् आकृष्टवती, तोषितवती च। अतः रावणस्य दृष्टेः स्पर्शात् भवती मलिना अस्ति। एतादृशीं मलिनां भवतीं महाकुले जातः अहं कथं वा परिग्रहीतुं शक्नुयाम्? भवत्याः विषये मम प्रीतिः नष्टा। अतः भवती यथा इच्छति तथा करोतु। बहु विचिन्त्य एतत् वचनं वदन् अस्मि अहम्। यदि लक्ष्मणः भवत्यै रोचेत तर्हि तेन सह वसतु भवती। अथवा भरतः रोचते चेत् तेन सह वा निवसतु। यत्र सुखं प्राप्यते इति भवती भावयति तत्र वसतु। आपद्गता भवती रक्षणीया आसीत् मया। तत् कृतम्। क्षत्रियधर्मः पालितः। किन्तु इतः परं मया सह स्थातुं न अर्हति भवती" इति।

कठोरवचनानि सीतया इतःपूर्वं विरलतया एव श्रुतानि आसन्। दीर्घकालं यावत् दुष्टपीडादिकम् अनुभूय, इदानीं प्रियवचनानि श्रूयन्ते इति निरीक्षया आगतया सीतया कर्णकठोराणि वाक्यानि श्रोतव्यानि अभवन्। व्याधदर्शनात् भीता हरिणी इव जाता सा। असहाया अबला सा ऋते अश्रुस्रावणात्, किम् अन्यत् कुर्यात्? अहो कष्टकरी स्थितिः सीतायाः!



# निश्शुल्कं प्रवेशः

हेमन्तपुरे विश्वेश्वरः नाम कश्चित् आसीत्। तेन काचित् नाटकसंस्था सञ्चाल्यते स्म। संस्थायाः आरम्भः यदा कृतः तदा कानिचन दिनानि जनाः उत्साहेन नाटकानि दृष्टवन्तः। किन्तु क्रमशः द्रष्टॄणां सङ्ख्यायां ह्रासः जातः। जनानाम् आकर्षणार्थं विश्वेश्वरः 'पारिजातापहरणं'नाम नूतनं नाटकं रचितवान्। 'एतस्य प्रदर्शनार्थं यावान् व्ययः भवति तावत् धनम् ऋणरूपेण ददातु' इति मित्रं सुदर्शनं वदन् 'नाटकप्रदर्शनं लाभकरं यथा स्यात् तथा कर्तुम् उपायम् अपि सूचयतु' इति प्रार्थितवान्।

सुदर्शनः मित्राय धनं दत्त्वा– "अग्रिमे शुक्रवासरे नाटकस्य प्रदर्शनार्थं व्यवस्था भवतु" इति उक्त्वा प्रदर्शनदिने किं करणीयम् इत्यपि सूचितवान्।

एतदनुगुणं विश्वेश्वरः प्रचारं कृतवान् यत् शुक्रवासरे अपूर्वस्य पारिजातापहरणनामकस्य नाटकस्य प्रदर्शनं भविष्यति, प्रवेशः निश्शुल्कः इति।

नाटकदिने बहवः उपस्थिताः। नाटकमन्दिरं प्रेक्षकैः पूर्णम् आसीत्। नाटकप्रदर्शनं समाप्तम्। जनाः यदा ततः निर्गन्तुम् उद्युक्ताः तदा द्वारेषु स्थिताः सुदर्शनस्य जनाः प्रेक्षकान् साग्रहम् उक्तवन्तः यत् नाटकदर्शनं कृतं यत् तदर्थं शुल्कं दातव्यम् इति।

"एतत् तु अन्याय्यम्। निश्शुल्कः प्रवेशः इति खलु प्रचारः कृतः आसीत्? इदानीं शुल्कं यच्छन्तु इति वदन्ति किल भवन्तः? किम् एतत्?" इति कोपेन उक्तवन्तः जनाः।

"प्रवेशः निश्शुल्कः इति तु सत्यम् एव। किन्तु निर्गमनं सशुल्कम्। अतः धनं दातव्यं भवद्भिः" इति उक्तवन्तः सुदर्शनस्य जनाः।

अनन्यगतिकतया प्रेक्षकाः शुल्कं दत्त्वा ततः निर्गतवन्तः।





# मायाचित्रम्

राजस्थानराज्ये पूर्वं जयसिंहः नाम राजा आसीत्। सः चित्रकलाप्रियः आसीत्। तस्य आस्थाने कश्चन श्रेष्ठः चित्रकारः आसीत्। तद्द्वारा स्वस्य चित्रं लेखयितुम् इच्छति स्म राजा। किन्तु तदभ्यन्तरे एव सः चित्रकारः दिवं गतः। अतः आस्थानचित्रकारस्य स्थानं रिक्तं जातम्।

तेषु एव दिनेषु हिमालयप्रदेशे निवसन् हेमचन्द्रः नाम चित्रकारः ज्ञातवान् यत् जयसिंहस्य आस्थाने चित्रकारस्थानं रिक्तम् अस्ति इति। तत् स्थानं मया प्राप्तव्यम् इति निश्चितवान् हेमचन्द्रः। अतः तस्मिन् एव दिने गृहात् निर्गत्य गर्दभम् आरुह्य दिनत्रयं यावत् प्रयाणं कृत्वा बुभुक्षितः पिपासितः च हेमचन्द्रः जयसिंहस्य आस्थानं प्राप्तवान्।

हेमचन्द्रः राजानं नमस्कृत्य उक्तवान्– "श्रीमन्! विना भोजनं, विना विश्रान्तिं च दिनत्रयं यावत् प्रयाणं कृत्वा दूरस्थात् हिमालयात् भवद्दर्शनार्थम् अहम् अत्र आगतः। एतानि चित्राणि मया एव चित्रितानि। कृपया एतानि पश्यतु, येन मम चित्रकलाप्रतिभा भवता ज्ञाता भवेत्" इति।

एतावत् उक्त्वा आत्मना चित्रितानि चित्राणि प्रदर्शितवान् हेमचन्द्रः। तानि चित्राणि राज्ञे नितराम् अरोचन्त।

"एतानि चित्राणि उत्तमानि सन्ति। एतेषां मूल्यं किम्?" इति पृष्टवान् राजा।

"प्रभो, भवतः आस्थाने चित्रकारस्थानं रिक्तम् अस्ति इति वार्ता श्रुता मया। यदि तत् स्थानं मह्यं दीयेत तर्हि अहं नितराम् उपकृतः भवेयम्" इति उक्तवान् हेमचन्द्रः।

राजा अङ्गीकारपूर्वकं शिरः चालितवान्। अनन्तरदिने एव हेमचन्द्रः आस्थान-चित्रकारस्थानम् अलङ्कृतवान्।

'कलाकारद्वारा मदीयं चित्रं चित्रणीयम्' इति जयसिंहस्य इच्छा आसीत् खलु? इदानीं हेमचन्द्रस्य दर्शनतः सा इच्छा जागरिता अभवत्। राजा हेमचन्द्रम् उक्तवान्– "राजास्थाने सर्वासु भित्तिषु अस्मत्पूर्वजानां चित्राणि सन्ति। मदीयं चित्रम् अपि आस्थानभित्तौ विराजेत इति मम इच्छा। अतः भवान् आस्थानभित्तौ मम चित्रं चित्रयतु, येन भाविजनाः मम चित्रं द्रष्टुं शक्नुयुः" इति।

तदा हेमचन्द्रः उक्तवान्– "भवतः चित्रं तु अवश्यं लेखिष्यामि। तेनैव सह राज्ञी-मन्त्रि-सभासदां चित्रम् अपि लेखिष्यामि। चित्रलेखनार्थम् उत्तमां भित्तिं प्रदर्शयतु। समग्रस्य आस्थानस्य चित्रणम् एव करिष्यामि" इति।

एतत् वचनं राज्ञः सन्तोषाय अभवत्। समग्रभित्तौ राजपरिवारस्य चित्रं लेखितुम् अनुमतिं दत्तवान् राजा।

राजास्थाने बहवः स्थूलोदराः आसन्। केचन कुब्जाः आसन्। पुनः केचन विकृतनेत्राः अपि आसन्। कुरूपिणः अपि केचन आसन्। तेषु एकैकः अपि हेमचन्द्रस्य समीपम् आगत्य उक्तवान्– "भोः, भवता चित्र्यमाणे चित्रे मम रूपं सम्यक् एव दर्शनीयम्। यदि कुरूपिता काऽपि प्रदर्श्येत तर्हि भवतः हानिः स्यात्, प्राणापायः अपि स्यात्" इति।



आस्थानसदस्याः हेमचन्द्रं भाययन्तः सन्ति इति वार्ता राज्ञा अपि ज्ञाता। सः हेमचन्द्रम् आहूय उक्तवान्– "आस्थानसदस्यानां रूपं यथा अस्ति तथैव चित्रणीयं भवता। यदि भवान् चित्रणे कस्यचित् रूपस्य परिवर्तनार्थं प्रयत्नं कुर्यात् तर्हि अहं भवन्तं शूलम् आरोपयिष्यामि" इति।

हेमचन्द्रस्य इदानीं सङ्कटपरिस्थितिः। यथास्थितं चित्र्यते चेत् आस्थानिकानां कोपः। चित्रणे रूपपरिवर्तनार्थं प्रयत्नः क्रियते चेत् राज्ञः कोपः। अतः किं करणीयम् इति बहुधा चिन्तितवान् हेमचन्द्रः। अन्ते तेन कश्चन निर्णयः कृतः।



यस्यां भित्तौ चित्रं रचनीयम् इति निश्चितं तस्याः पुरतः जवनिका बद्धा। त्रिभिः सहकारिभिः सह जवनिकायाः पृष्ठतः वासम् आरब्धवान् हेमचन्द्रः। प्रतिदिनं षड्रसोपेतं भोजनं कुर्वन् सः सुखेन स्थितवान्।

एवम् एकः मासः अतीतः। एकदा राजा हेमचन्द्रम् आहूय पृष्टवान् यत् चित्रं कियत् लिखितम्? इति। हेमचन्द्रः तदा उक्तवान्– 'अचिरात् एव चित्रं सिद्धं भविष्यति' इति। हेमचन्द्रस्य वचने विश्वसन् राजा मौनम् आश्रितवान्।

पुनः कानिचन दिनानि अतीतानि। राजा पुनरपि हेमचन्द्रम् आहूय चित्रविषये पृष्टवान्। हेमचन्द्रः पुनरपि तदेव उक्तवान् यत् अचिरात् एव चित्रं सिद्धं भविष्यति इति।

एवम् एव त्रयः मासाः अतीताः। तथापि चित्रलेखनं तु न समाप्तम्। अन्ते राजा कदाचित् कोपेन हेमचन्द्रम् उक्तवान्– "भोः, सप्ताहाभ्यन्तरे भवता चित्रलेखनं समापनीयम्। अन्यथा भवन्तं कठोरं दण्डयिष्यामि" इति।

तदा हेमचन्द्रः उक्तवान्– "प्रभो, चित्रं सिद्धम् अस्ति। श्वः उत्तमं दिनम्। अतः श्वः एव चित्रस्य अनावरणकार्यक्रमः भवतु। श्वः प्रातः भवान् सपरिवारम् आगत्य चित्रं पश्यतु" इति।

एतां वार्तां श्रुत्वा राजा नितरां सन्तुष्टः। सन्तोषकरीम् एतां वार्ताम् अन्तःपुरजनान् आस्थानिकान् च उक्तवान् सः।

अनन्तरदिने प्रातः राजा, राज्ञी, अन्तःपुरजनाः, आस्थानिकाः चापि चित्रभित्तिसमीपम् आगताः। भित्तेः पुरतः जवनिका तु यथापूर्वं लम्बमाना आसीत्।

चित्रकारः हेमचन्द्रः तत्र उपस्थितान् उद्दिश्य उक्तवान्– "सर्वेषां चित्राणि मया अत्र चित्रितानि सन्ति। चित्रे स्वस्य स्वरूपं स्वयं परिशीलयन्तु भवन्तः। किन्तु चित्रस्य एकं वैशिष्ट्यं यत् यस्य जन्म शुद्धं भवति सः एव एतत् चित्रं द्रष्टुं शक्नोति। यस्य जन्म विशुद्धं न भवति सः एतत् चित्रं सर्वथा द्रष्टुं न शक्नोति" इति।

ततः जवनिका अपसारिता। भित्तौ केनापि किमपि चित्रं न दृष्टम्। किन्तु कोऽपि एतत् वचनैः व्यक्तीकर्तुं न इच्छति स्म। 'अन्ये सर्वे पश्यन्तः सन्ति, अहं द्रष्टुं न शक्नोमि' इति एकैकः अपि चिन्तयन् आसीत्।

अत्रान्तरे राज्ञा सह स्थितः विदूषकः उक्तवान्– "अहो, मम जन्म विशुद्धं नास्ति इति भाति। यतः अहं भित्तौ किमपि चित्रं न पश्यामि" इति।

तदा अन्ये अपि केचन मन्दस्वरेण उक्तवन्तः यत् वयम् अपि भित्तौ चित्रं किमपि न पश्यामः इति। ततः अवशिष्टाः सर्वे उक्तवन्तः यत् वयम् अपि चित्रं न पश्यामः इति। सर्वेषां मुखतः अपि समानः आशयः यदा निर्गतः तदा राजा कोपेन उक्तवान्– "नीच! वञ्चक! अस्मान् सर्वान् वञ्चयितुं प्रयत्नं करोति वा भवान्? एतस्य परिणामः कः स्यात् इति कदाचित् वा चिन्तितं वा भवता? शूलम् आरोपयिष्यामि भवन्तम्" इति।

तदा हेमचन्द्रः करौ योजयित्वा विनयेन उक्तवान्– "प्रभो, यदि भवान् मां शूलम् आरोपयितुम् इच्छेत् तर्हि भवन्तं निवारयितुं कः समर्थः? इतः सजीवं गन्तव्यम् इति ममापि इच्छा नास्ति। किन्तु मम एकं निवेदनं यत् उद्बन्धनसमये सुवर्णरज्जोः उपयोगः मास्तु इति। लक्ष्मीः मयि अप्रसन्ना अस्ति। तस्याः कोपस्य कारणतः यदि सुवर्णरज्जुः छिन्ना भवेत् तर्हि मम मरणं न भवेत्। पुनरपि मम जीवनं दुर्भरं स्यात्। अतः सुवर्णरज्ज्वाः उपयोगः तु कृपया मास्तु" इति

हेमचन्द्रस्य वचनं श्रुतवतः राज्ञः कोपः अपगतः। सः उच्चैः हसितवान्। 'हेमचन्द्रः श्रेष्ठः चित्रकारः, विनोदप्रियः च अस्ति चेदपि राजास्थाने स्थातुं न अर्हः' इति निर्णीतवान् राजा। दूरदेशात् आगतवति तस्मिन् करुणां प्राप्नुवन् सः हेमचन्द्राय सुवर्णनाणकानि अन्यपारितोषिकानि च दत्तवान्।

हेमचन्द्रः गर्दभम् आरुह्य स्वकीयं जन्मस्थानं प्रति गतवान्।



# र स वा र्ताः



## शुक्रग्रहे जलम्

अमेरिकादेशे 'नासा आम्स् रिसर्च् केन्द्रम्' अस्ति। ततः शुक्रग्रहस्य विषये विषयान् सङ्ग्रहीतुं अन्तरिक्षं प्रति 'पयोनीर्-१२' नामकः उपग्रहः प्रेषितः आसीत्। सः उपग्रहः स्वकार्यं समाप्य गते अक्टोबर्मासे इतस्ततः विकीर्णः। उपग्रहेण प्रेषिताः विषयाः यदा शास्त्रज्ञैः परिशीलिताः तदा ज्ञातं यत् सामान्यतः त्रिलक्षकोटिवर्षेभ्यः पूर्वं समुद्रस्य जलम् अत्र आसीत् इति। तत्कारणतः तत्र शुक्रग्रहे जीवसमूहः अपि आसीत् इति विज्ञानिभिः ऊह्यते।

## उपनेत्रेषु दूरदर्शनम्

गृहेषु विद्यमानानां सामान्यदूरदर्शनानां विषये सामान्यतः सर्वे जानन्ति। एतेषु दिनेषु प्रवाससमये नेतुं योग्यं 'पोर्टबल्' दूरदर्शनम् अपि आविष्कृतम् अस्ति। एतादृशं दूरदर्शनं विद्युत्कोषद्वारा कार्यं करोति। कार्यानादिषु स्थापयितुं योग्यं लघु दूरदर्शनम् अपि निर्मितम् अस्ति। हङ्गेरीप्रदेशीयौ द्वौ तन्त्रज्ञौ सद्यः एव, उपनेत्रस्य आवरणे योजयितुं योग्यम् आत्यन्तं लघु दूरदर्शनं संशोधितवन्तौ। विशिष्टकाचकयुक्तस्य उपनेत्रस्य साहाय्येन अत्र चित्राणि द्रष्टुं शक्यन्ते।

## उत्तमं छायाग्राहकम्

वार्तापत्रिकायाः छायाग्राहकाः व्यक्तेः कार्यक्रमस्य वा चित्रं चित्रग्राहकेण गृहीत्वा रासायनिकद्रवैः तत् क्षालयित्वा प्रतिकृतिं सज्जीकृत्य पत्रिकां प्रति प्रेषयन्ति। किन्तु इदानीम् एतादृशानि कष्टानि अनुभोक्तव्यानि न सन्ति। चित्रग्रहणस्थलात् पत्रिका सुदूरे एव भवतु नाम, तथापि क्षणमात्रेण भावचित्रं प्रेषयितुं शक्यते इदानीम्। उपग्रहीय-तान्त्रिकपरिज्ञानस्य कारणतः एतत् सिद्धम् अस्ति। चित्रग्राहकस्य पृष्ठभागे इलेक्ट्रानिक्साधनं भवति। तत् रेडियोफोन्सम्पर्कं प्राप्य उपग्रहेण सम्बन्धं प्राप्नोति। एवं चित्रग्राहकेण स्वीकृतं चित्रम् उपग्रहद्वारा केन्द्रगणकयन्त्रं प्राप्नोति। तत् ततः यत्र प्रेषणीयं तत्र प्रेषयिष्यति च।



# न्यायनिर्णयः

धवलगिरिनामकं राज्यं धर्मपालः नाम राजा पूर्वं पालयति स्म। दानधर्मपालनादिषु सः अद्वितीयः आसीत्। न्यायनिर्णयसमये सः स्व-परभेदं, धनिक-निर्धनभेदम्, उच्च-नीचभेदं वा न गणयति स्म। न्यायविषये सर्वे समानाः इति तस्य भावना आसीत्।

यदि कश्चित् अन्यस्य धनम् अपहरेत् तर्हि सः अन्यः धनापहर्तुः धनम् अपहर्तुम् अर्हति स्म। यः अन्यस्य अङ्गच्छेदं करोति तस्य अङ्गं छेत्तुम् अर्हति स्म अन्यः। एषः न्यायक्रमः तस्मिन् राज्ये पूर्वकालात् अनुवर्तते स्म, सर्वैः जनैः एषः क्रमः अङ्गीकृतः आसीत् अपि। अतः कृतस्य प्रतीकारस्वीकारः न्यायसम्मतः इति भाव्यते स्म तत्र।

तस्मिन् राज्ये न्यायः कठोरतया पाल्यते स्म इत्यतः दण्डभीतिः सर्वेषु आसीत्। अतः अपराधः अपि विरलतया एव प्रचलति स्म। एवं न्यायनिर्णयक्रमः तत् राज्यं समीचीने मार्गे नयति स्म।

कदाचित् राजसभा प्रवर्तमाना आसीत्। राजा सिंहासने उपविष्टः आसीत्। मन्त्रि-सेनापतिप्रभृतयः यथोचिते स्थाने उपविष्टवन्तः आसन्। कस्मिंश्चित् विषये चर्चा प्रचलन्ती आसीत्। तदा कश्चन सर्पः अकस्मात् राजसभां प्राविशत्।

सर्पदर्शनात् सर्वे भीताः। केचन सर्पस्य मारणार्थम् उद्युक्ताः अभवन्। अत्रान्तरे युवराजः झटिति आसनात् उत्थाय खड्गेन तं सर्पं द्विधा छिन्नवान्।

एवं छेदे कृते अपि सः छिन्नार्धभागः सर्पः ततः महता कष्टेन मन्दं सर्पन् स्ववासस्थानं वल्मीकं प्राविशत्। वल्मीके सर्पिणी आसीत्। सर्पः पत्नीं सर्पिणीम् अवदत्– "इतस्ततः सञ्चरन् अहम् अज्ञानवशात् राजसभां



प्रविष्टवान्। तदा युवराजः खड्गेन मम च्छेदं कुर्वन् एतादृशीं स्थितिं प्रापितवान्। एतस्य राज्यस्य न्यायनिर्णयक्रमं भवती जानाति। अपराधी पुत्रः चेदपि राजा न्यायनिर्णये अनौचित्यं तु न आचरति। अतः भवती गत्वा राजानं न्यायनिर्णयार्थं निवेदयतु। ततः युवराजं दष्ट्वा मारयतु च'' इति। एतावता एव तस्य प्राणोत्क्रमणकालः आसन्नः। सर्पः तत्रैव पतितः सन् क्षणाभ्यन्तरे प्राणैः वियुक्तः अभवत्।

सर्पिणी रात्रौ राजभवनं प्रविष्टवती। कथमपि युवराजस्य प्रकोष्ठम् अपि प्रविष्टवती सा। गभीरनिद्रायां मग्नं युवराजं स्वशरीरेण आवृत्य स्थितवती सा। सर्पस्पर्शतः युवराजः जागरितः। सर्पं दृष्ट्वा नितरां भीतः सः कम्पमानः उच्चैः आक्रन्दनं कृतवान्।

युवराजस्य आक्रन्दनं श्रुत्वा दास-दास्यः तत्र उपस्थिताः।

सर्पिणी कथं मारणीया इति केनापि न ज्ञातम्। यदि सर्पिण्याः मारणार्थं प्रयत्नः क्रियेत तर्हि राजकुमारस्य व्रणः भवेत् इति सर्वेषां भीतिः। अतः किं करणीयम् इति अजानन्तः सर्वे मौनं स्थितवन्तः आसन्। तदा सर्पिणी उक्तवती– ''यदि भवत्सु कश्चित् मम मारणार्थं प्रयत्नं कुर्यात् तर्हि अहं राजकुमारं दशेयम्। अतः प्रथमं भवन्तः इतः गत्वा महाराजम् आह्वयन्तु। न्यायनिर्णयः भवतु अत्रैव'' इति।

अचिरात् राजा तत्र आगतः। सर्पिणी पत्युः मरणं राजानं निवेद्य उक्तवती– ''मम पतिः कस्यापि अपकारं न कृतवान्। मार्गभ्रष्टः सन् सः राजसभां प्रविष्टवान्। एतदर्थं युवराजः तं मारितवान्, मां च विधवां कृतवान्। अतः अहम् अपि युवराजं दशन्ती तस्य पत्नीं विधवां करिष्यामि'' इति।

सर्पिण्याः वचनं श्रुत्वा राजा व्याकुलचित्तः जातः। 'निरपराधस्य सर्पस्य मारणं यत् कृतं तदर्थं न्यायशास्त्रस्य अनुगुणं युवराजेन दण्डनम् अनुभोक्तव्यम् एव। किन्तु एकमात्रस्य पुत्रस्य दण्डनं कथं स्यात्? अत्र कः उपायः?' इति बहुधा चिन्तनं कृतवान्

राजा! अनन्योपायः सः न्यायाधिकारिणौ आनायितवान्। राजास्थानम् आगतौ तौ सर्पस्य वचनं श्रुतवन्तौ।

अनन्तरम् एकः न्यायाधिकारी उक्तवान्– "प्रभो, अस्माकं राज्ये 'कृतस्य प्रतीकारः करणीयः' इति नियमः पाल्यमानः अस्ति। युवराजः सर्पं मारितवान् इत्यतः एषा सर्पिणी विधवा जाता। अतः एतां क्रियाम् अनुकुर्वन् सर्पः स्वपत्नीवैधव्यकारणस्य राजकुमारस्य पत्नीं विधवां कर्तुम् अर्हति" इति।

तदा अनङ्गीकारपूर्वकं शिरः चालयन्ती उक्तवती सर्पिणी– "विचित्रः न्यायनिर्णयः एषः। मां वञ्चयितुम् एषः प्रयत्नः। मृतः मम पतिः कथं वा युवराजपत्नीं विधवां कुर्यात्? महती वञ्चना एषा" इति।

एतस्य उत्तरं किमपि वक्तुम् अशक्नुवन् सः न्यायाधिकारी मौनम् आश्रितवान्।

तदा अपरः न्यायाधिकारी अग्रे आगत्य उक्तवान्– "सर्पिण्याः तर्कः युक्तः एव अस्ति। यदि सा राजकुमारं दंष्टुम् इच्छेत् तर्हि तदपि युक्तम् एव। किन्तु अत्र अन्यः कश्चन धर्मसन्देहः मां बाधते" इति। अनन्तरं सः सर्पिणीं पृष्टवान्– "वत्से! भवत्याः कति अपत्यानि?" इति।

"पञ्च अपत्यानि मम" इति अश्रुपूर्णनेत्रा सर्पिणी उक्तवती।

तदा न्यायाधिकारी उक्तवान्– "एवं तर्हि राजकुमारः भवतीं पञ्चपुत्रयुक्तां विधवां कृतवान्। एतस्य प्रतिक्रियारूपेण यदि भवती



युवराजपत्नीं पञ्चपुत्रयुक्तां विधवां कुर्यात् तर्हि तत् न्यायसम्मतं स्यात्। यदि एतस्मात् भिन्नतया व्यवहारं कुर्यात् तर्हि तत् अनुचितं भवेत्, तस्य च फलम् इहलोके परलोके वा अनुभोक्तव्यं स्यात्" इति।

एतत् वचनं सर्पिणी अङ्गीकृतवती। तदा न्यायाधिकारी पुनः उक्तवान्– "एवं तर्हि भवत्या कानिचन वर्षाणि यावत् प्रतीक्षा करणीया। यतः इदानीं युवराजपत्नी पुत्रद्वयवती अस्ति। यदा सा पञ्चपुत्रवती भविष्यति तदा भवती युवराजं दंष्टुम् अर्हति" इति।

तस्मिन् राज्ये यः न्यानिर्णयक्रमः आसीत् तदनुगुणम् एव आसीत् न्यायाधिकारिणः वचनम्। अतः अनन्यगतिका सर्पिणी निर्णयम् अङ्गीकृत्य ततः गच्छन्ती राजानम् उक्तवती– "यदा युवराजपत्नी पञ्च-पुत्रवती भविष्यति तदा भवान् मां सूचयतु" इति।

"यदा युवराजपत्नी पञ्चपुत्रवती भविष्यति तदा महाराजः अवश्यं सूचयिष्यति, येन भवती प्रतीकारसाधनार्थम् अवकाशं प्राप्नुयात्। धर्ममूर्तिः महाराजः वचनभङ्गं कदापि न करिष्यति। तथापि यदि सः कथमपि विस्मरेत् तर्हि न्यायविभागीयाः वयं स्मारयिष्यामः" इति आश्वासनं दत्तवान् न्यायाधिकारी।

एतदनन्तरं युवराजपत्न्या किमपि अपत्यं न प्राप्तम्। सर्पिणी तु युवराजस्य दंशनार्थम् अवकाशं प्रतीक्षमाणा स्थितवती।

यदा यदा राजकुमारः सपरिवारम् उद्यानम् आगच्छति तदा सर्वदा सर्पिणी वल्मीकात् बहिः आगत्य युवराजस्य पुत्रान् गणयन्ती, पञ्चसङ्ख्याकत्वम् अपश्यन्ती निराशया प्रतिगच्छति स्म।

कालः गतः। किन्तु युवराजस्य अपत्यानि पुनः न उत्पन्नानि। प्रतीकाराग्निः सर्पिण्याः मनसि ज्वलति स्म। किन्तु तम् अग्निं निवारयितुं मार्गम् अपश्यन्ती सा कदाचित् परलोकं गतवती।



# प्रकृतिवैचित्र्याणि–



## पर्णानां वर्णस्य कारणम्

तृणानि, वृक्षपर्णानि, इत्यादयः हरिद्वर्णेन दृश्यन्ते यत् तत्र तेषु स्थितः 'क्लोरोप्लास्ट्स्'नामकः पदार्थः एव कारणम्। एषः क्लोरोप्लास्ट्स्-पदार्थः चतुर्विधः भवति। 'क्लोरोफिल्' नीलवर्णेन हरिद्वर्णेन च, 'क्लोरोफिल्-बि' पीतवर्णेन, श्वेतमिश्रितहरिद्वर्णेन च, 'क्याण्टोफिल्' पीतवर्णेन, 'केरोटिन्' पाटलवर्णेन च भवन्ति। तृणपर्णादयः ऋतुकालस्य अनुगुणं कदाचित् वर्णपरिवर्तनं प्राप्नुवन्ति यत् तत्र कारणम् एते पदार्थाः एव।

## वर्णपरिवर्तनसमर्थाः गोधिकाः



शत्रुभ्यः आत्मनः रक्षणार्थं प्रकृत्या जन्तुभ्यः कानिचन आनुकूल्यानि कल्पितानि सन्ति। परिसरस्य अनुगुणं जीविनः स्ववर्णपरिवर्तनं कर्तुं शक्नुवन्ति यत् तत् तादृशेषु आनुकूल्येषु अन्यतमम्। एतादृश्या शक्त्या युक्तेषु जीविषु अन्यतमा अस्ति गोधिका। गोधिकानां देहे 'क्रोमोटो फोर्स्' नामकाः वर्णपरिवर्तने उपकारकाः कणाः भवन्ति। एते कणाः नक्षत्राकारेण भवन्ति। गोधिकादेहे विविधवर्णीयाः कणाः भवन्ति। एकवर्णमयः कणः अन्यवर्णकणेन यदा मिलति तदा नूतनः वर्णः उत्पद्यते। यथा– नीलवर्णस्य पीतवर्णस्य च मेलनात् हरिद्वर्णः निर्मितः भवति। हरिद्वर्णस्य रक्तवर्णस्य च मेलनात् पाटलवर्णः उत्पद्यते। रक्त-नीलवर्णयोः मेलनतः धूसरवर्णः उत्पद्यते।



## सिन्धूरवर्णीयाः बकाः

यथा काकः एकमात्रवर्णेन युक्तः भवति तथा स्थिताः पक्षिणः प्रायः विरलाः। एतादृशेषु विरलेषु ट्रेनिडाड्प्रदेशे दृश्यमानाः सिन्धूरवर्णीयाः बकाः प्रधानाः। एतेषां सौन्दर्यम् अपूर्वम्। षट्कोटिवर्षेभ्यः पूर्वं स्थितानाम् एतज्जातीयानां पिच्छानि प्राप्तानि सन्ति। इजिप्ट्जनाः भावयन्ति यत् मानवजातेः निर्माणतः पूर्वम् एते सिन्धूरवर्णाः बकाः सृष्टाः आसन् इति। एतेषां विषये आदरः इदानीम् अपि अनुवर्तते। जन्मसमये एतज्जातीयाः पक्षिणः धूसरवर्णेन भवन्ति। ततः श्वेततां, पुनः पाटलत्वम्, अन्ते सिन्धूरवर्णतां च प्राप्नुवन्ति।



TEDDY

*A wide range of soft toys from the Chandamama Collection – each with its own unique appeal!*

*Every Soft Toy in the Chandamama Collection has been specially made to bring your child years of warmth and friendship.*



BUNNY

- *Totally Safe – for children of any age.*
- *Durable – high quality synthetic fibre used.*
- *Washable – will not lose shape.*

*And now – a surprise gift offer!*

*With every Chandamama Soft Toy you buy. Ask your shopkeeper for a*

**Free Gift Coupon.**

*Simply fill it in and mail it to the given address. We will post you gifts that will keep your child amused and happy for hours.*

*Buy Now – offer open for a limited period only!*

*Available at all leading outlets.*



JUMBO



FOXY




CHANDAMAMA

COLLECTION

ARTIG/CT/1121

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां सप्टम्बर्-९३ मासे प्रकटयिष्यामः।



M. Natarajan



T.C. Jain

* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'मे'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **उद्याने स्वच्छन्दं वयं क्रीडामः।**

द्वितीयचित्रम् - **खिन्नाहं, नास्त्यन्यः, किं करवाणि।**

प्रेषकः - लक्ष्मीनारायणः एस्., चा.सं. पाठशाला, बेङ्गलूरु-१८


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

PolioPlus



# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | **BCG** | **Tuberculosis** | Once |
| 6 weeks | **Polio** | **Polio** | Three times with intervals of at least one month |
| 6 weeks | **DPT** | **Diphtheria Pertussis (Whooping Cough) Tetanus** | Three times with intervals of at least one month |
| 9 months | **Measles** | **Measles** | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**

Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

**HEALTHY CHILD—NATION'S HOPE & PRIDE**

Design courtesy : World Health Organisation